'वैदिकी वैदिकत्वेन सामान्येनोपतिष्ठते ।
लौकिकी त्वसमानत्वान्नोपस्थास्यत्यपेक्षिता ॥' इति

न च 'यद्येकं यूपं स्पृशेदेष ते वायाविति ब्रूया'दिति विहितस्य 'एष ते वायावि'ति वचनस्य वैदिकत्वसामान्येन विहितवैदिकयूपस्पर्शनिमित्तकत्वमेव स्यात् । नचेष्टापत्तिः । 'लौकिके दोषसंयोगादि' ति नावमिकाधिकरणविरोधप्रसङ्गादिति वाच्यम् । 'यूपो वै यज्ञस्य दुरिष्टमामुञ्चते तस्माद्यूपो नोपस्पृश्य' इति प्रतिषिध्य 'यद्येकं यूपं स्पृशेत् एष ते वायाविति ब्रूयादि' ति अनन्तरमेव विहितस्य प्रतिषिद्धप्रायश्चित्तसांकांक्षलौकिकस्पर्शविषयत्वावश्यंभावेन वैदिकविषयत्वासंभवेपि असति बाधके वैदिकविषयत्वस्य युक्तत्वात् । अतएव 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान्निर्वपेदि' ति विहितेष्टिर्वैदिक एवाश्वदाने, न तु 'न केसरिणो ददाती' ति निषिद्धे प्रायश्चित्तसापेक्षे सुहृदादिभ्यः स्नेहादिना क्रियमाण इति निर्णीतं तृतीये । तथा 'योगिनः प्रति स्मर्यते स्मार्ते चैते' इति सूत्रे स्मार्तस्य वेदान्ते न प्रत्यभिज्ञानमित्युक्तं परैः । ततश्च 'स्वर्गे लोक' इति मन्त्रे अध्यात्मशास्त्रसिद्धस्यापहतपाप्मत्वादिब्रह्मगुणाष्टकस्यैव ग्रहणमुचितम् । 'स्वर्गलोका अमृतत्वं भजन्त' इति द्वितीयप्रश्नमन्त्रे अमृतत्वभाक्त्वश्रवणादमृतत्वशब्दस्याध्यात्मशास्त्रे मोक्षएव प्रयोगात् । 'अजीर्यताममृताना' मित्यत्र अमृतशब्दस्यापि मुक्तपरत्वेनापेक्षिकामृतत्वपरत्वाभावात् । उत्तरत्र 'ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् । अभयं तितीर्षतां पारं नाचिकेतं शकेमहि' इति परस्यैव ब्रह्मणो नाचिकेताग्निप्राप्यत्वकथनेन स्वर्गशब्दस्य प्रसिद्धस्वर्गपरत्वासंभवात् । 'नान्यन्तस्मा नचिकेता वृणीते' इति ब्रह्मेतरविमुखतया प्रतिपादितस्य नचिकेतसः क्षयिष्णुस्वर्गप्रार्थनानुपपत्तेश्च । 'मुख्यं वा पूर्वचोदना लोकवदि' त्यत्र समसंख्याकयोःपरस्परविरोध एव मुख्यस्य प्राबल्यम् । न ह्यल्पवैगुण्ये संभवति बहुवैगुण्यं प्रयोगवचनं क्षमते । अतः यत्र जघन्यानां भूयस्त्वं तत्र 'भूयसां स्यात् सधर्मत्वं' इति न्याय एव प्रवर्तत इत्येव मीमांसकैः स्थिरीकृत्य सिद्धान्तितत्वात् , प्रतर्दनविद्यायां 'एषह्येव साधु कर्म कारयति' एष लोकाधिपतिरेष लोकपालः आनन्दोऽजरोऽमृतः' इत्यौपसंहारिकपरमात्मधर्मबाहुल्येन प्रक्रमश्रुतजीवलिङ्गबाधस्य 'प्राणस्तथानुगमा'दित्यत्र प्रतिपादितत्वादित्यलमतिचर्चया । प्रकृतमनुसरामः ॥ २० ॥

**येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नाऽयमस्तीति चैके ।**
**एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥ २१ ॥**

नचिकेता आह—**येयं प्रेत** इति । 'अत्ता चराचरग्रहणा'दित्यधिकरणे इमं मन्त्रं प्रस्तुत्येत्थं हि भगवता भाष्यकृता— 'अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासयाऽयं प्रश्नः क्रियते । एवं च 'येयं प्रेत' इति न शरीरवियोगमात्राभिप्रायम् । अपितु सर्वबन्धविनिर्मोक्षाभिप्रायम् । यथा 'न प्रेत्य संज्ञास्ती 'ति । अयमर्थः—मोक्षाधिकृते मनुष्ये **प्रेते** सर्वबन्धविनिर्मुक्ते तत्स्वरूपविषया वादिविप्रतिपत्तिनिमित्ता अस्तिनास्त्यात्मिका येयं विचिकित्सा तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं **विद्यां** जानीयामिति । तथाहि बहुधा विप्रतिपद्यन्ते । केचिद्वित्तिमात्रस्यात्मनः स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते । अन्येतु वित्तिमात्रस्यैव सतोऽविद्यास्तमयम् । परे पाषाणकल्पस्यात्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्यरूपम् । अपरे अपहतपाप्मानं परमात्मानमभ्युपगच्छन्तः तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्योपाध्यपगमेन तद्भावलक्षणं मोक्षमातिष्ठन्ते । त्रय्यन्तनिष्णातास्तु निखिलजगदेककारणस्याशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासंख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणः शरीरतया प्रकारभूतस्य अनुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते । तत्र मोक्षस्वरूपं तत्साधनं च त्वत्प्रसादाद्विद्यामिति नचिकेतसा पृष्टो मृत्यु'रिति भाषितम् ॥ तथा 'त्रयाणामेव चैव' मिति सूत्रे 'तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेणोपेयस्वरूपमुपेतृस्वरूपमुपायभूतकर्मानुगृहीतोपासनस्वरूपं च पृष्ट' मिति च भाषितम् । श्रुतप्रकाशिकायां च ' 'येय' मित्यादि प्रश्नवाक्ये मोक्षस्वरूपप्रश्नः कण्ठोक्तः । प्रतिवचनप्रकारेणोपासनादिप्रश्नश्चार्थसिद्धः । निर्विशेषापत्तिर्मोक्षश्चेत् वाक्यार्थज्ञानस्योपायता स्यात् । उभयलिङ्गकं प्राप्यं चेत्तथात्वेनोपासनमुपायः स्यात् । अतः मोक्षस्वरूपज्ञानं तदनुबन्धिज्ञानापेक्ष'मिति वर्णितम् । अतः येयं प्रेत इत्यस्य मुक्तस्वरूपप्रश्नपरत्वमेव, न देहातिरिक्तपारलौकिककर्मानुष्ठानोपयोगिकर्तृभोक्त्रात्मकजीवस्वरूपमात्रपरत्वम् । अन्यथा तस्यार्थस्य दुरधिगमत्वप्रदर्शन-

विविधभोगवितरणप्रलोभनपरीक्षाया असंभवादिति द्रष्टव्यम् । नचिकेतसोऽयमभिप्रायः — हितैषिवचनादात्मा परित्यक्तचरमदेह आविर्भूतापहतपाप्मत्वादिगुणाष्टको भवतीत्युपश्रुत्य 'स्वर्गे लोके न भयं किंचनास्ती' त्यादिना मन्त्रद्वयेन मोक्षसाधनभूताग्निमप्राक्षम् । अधुना तु वादिविप्रतिपत्त्या तद्विषये सन्देहो जायते । अयं 'स्वर्गे लोके न भयं किंचनास्ती' त्यादिना मयोपन्यस्तापहतपाप्मत्वादिविशिष्टरूप आत्मा अस्तीत्येके नायमस्तीत्यपरे, त्वया उपदिष्ट एतज्जानीया' मिति । अत एव प्रतिवचने 'एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य, स मोदते मोदनीयं हि लब्ध्वे 'ति एतत्प्रश्नानुगुण्यमेव दृश्यते । अतः यथोक्त एवार्थः । केचित्तु— 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' विति सूत्रे तिरोहितमिति निष्ठान्तपदे उपसर्जनतया निर्दिष्टस्य तिरोधानस्य 'देहयोगाद्वा सोपि' इति तदुत्तरसूत्रे **सोपि** तिरोधानभावोपीति पुल्लिङ्गतच्छब्देन परामर्शदर्शनात् 'सर्वनाम्नाऽनुसन्धिवृत्तिच्छन्नस्ये' ति वामनसूत्रे कृत्तद्धितादिवृत्तिन्यग्भूतस्यापि सर्वनाम्ना परामर्शस्याङ्गीकृतत्वात् । येयं प्रेत इति निष्ठान्तप्रेतशब्दे उपसर्जनतया निर्दिष्टस्यापि प्रायणशब्दितमोक्षस्य 'देहयोगाद्वा सोपी' तिवत् 'नायमस्तीति चैके' इत्यत्र अयमिति पदेन परामर्शोऽस्तु । नचैवं भुक्तवत्यस्मिन् भोजनमस्ति वा नवेति वाक्यवत् मुक्तेऽस्मिन् मोक्षोऽस्ति न वेति सन्देहकथनं व्याहतार्थमिति वाच्यम् । मोक्षसामान्यमभ्युपेत्य मोक्षविशेषसन्देहस्योपपादयितुं शक्यत्वात् । अयमित्यनेन विशेषपरामर्शसंभवात् । ननु न प्रायणशब्दस्य मोक्षवाचित्वं क्वचिद्दृष्टम् । शरीरवियोगवाचित्वात् । श्रुतप्रकाशिकायां शरीरवियोगवाचित्वमभ्युपेत्यैव चरमशरीरवियोगपरतया व्याख्यातत्वादितिचेत्— अस्त्वेवम् । तथाप्ययमित्यनेन चरमशरीरवियोगपरामर्शसंभवात् तद्विषयिण्येव विचिकित्सा अस्तु । ननु तस्य निश्चितत्वात् तद्विषयिणी विचिकित्सा नोपपद्यत इति चेत्सत्यम् । अयं चरमशरीरवियोगः ब्रह्मरूपाविर्भावपूर्वभावित्वेन रूपेणास्ति न वेति विचिकित्सायास्सूपपादत्वादिति वदन्ति ॥ २१ ॥

**देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञेयमणुरेष धर्मः ।**
**अन्यं वरं नचिकेतो वृणीष्व मामोपरोत्सीरतिमा सृजैनम् ॥ २२ ॥**

एवं मुक्तस्वरूपं पृष्टो मृत्युरुपदिश्यमानार्थस्यातिगहनतया पारं प्राप्तुमप्रभवते

मध्ये पतयालवे नोपदेष्टव्यमिति मत्वाऽऽह- —**देवैरत्रापी**ति। बहुदर्शिभिरपि देवैरस्मिन् मुक्तात्मस्वरूपे **विचिकित्सितम्**—संशयितम्। **नही**ति। आत्मतत्त्वं न सुज्ञानमिति सूक्ष्मो (एष) धर्मः। सामान्यतो धर्म एव दुर्ज्ञानः। तत्राप्ययं दुर्ज्ञान इति भावः। **अन्यं वर**मिति। स्पष्टोऽर्थः। **मामोपरोत्सीरि**ति। मामा इति निषेधे वीप्सायां द्विर्वचनम्। उपरोधं माकार्षीः। एनं मां **अतिसृज**। मुञ्च ॥ २२ ॥

**देवैरत्रापि विचिकित्सितं किल त्वंच मृत्यो यन्न सुविज्ञेयमात्थ।**
**वक्ता चास्य त्वादृगन्यो न लभ्यः नान्यो वरस्तुल्य एतस्य कश्चित् ॥ २३ ॥**

एवमुक्तो नचिकेता आह—-**देवैरत्रापि विचिकित्सितं किले**ति। स्पष्टोऽर्थः। **त्वञ्चे**ति। त्वं च मृत्यो **न सुज्ञेयमि**ति यदात्मस्वरूपमुक्तवान्। **वक्ते**ति। **त्वादृक्**—त्वादृश इत्यर्थः। अन्यत् स्पष्टम् ॥ २३ ॥

**शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान्।**
**भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ॥ २४ ॥**

एवं नचिकेतसोक्तो मृत्युः विषयस्य दुरधिगमतया मध्ये न त्यक्ष्यतीति निश्चित्य सत्यपि ग्रहणसामर्थ्ये विषयान्तरासक्तचेतसे एतादृशं मुक्तात्मतत्त्वं नोपदेशार्हमिति मत्वा मुमुक्षास्थैर्यानुवृत्त्यर्थं प्रलोभयन्नुवाच—**शतायुष** इति। स्पष्टोऽर्थः। **भूमेरि**ति। पृथिव्याः विस्तीर्णं **आयतनं** मण्डलं राज्यं वृणीष्व। अथवा भूमेस्संबन्धि महदायतनं विचित्रशालाप्रासादादियुक्तं गृहं वृणीष्व। **स्वयञ्चे**ति। यावद्वर्षाणि जीवितुमिच्छसि तावज्जीवेत्यर्थः ॥ २४ ॥

**एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च।**
**महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥२५॥**

**एतत्तुल्यमि**ति। उक्तेन वरेण सदृशमन्यमपि वरं मन्यसे चेत् तदपि (म?) वृणीष्व। प्रभूतं हिरण्यरत्नादिकं चिरं जीवनं चेत्यर्थः। **एधि** भव। राजेति शेषः।

अस्तेर्लोण्मध्यमपुरुषैकवचनम् । **कामानां** – काम्यमानानां अप्सरःप्रभृतिविषयाणां । **कामभाजं**—कामः कामना तां विषयतया भजतीति कामभाक् तं काम्यमानाप्सरः-प्रभृतीनामपि कामनाविषयं करोमीत्यर्थः ॥ २५ ॥

**ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामाꣳश्छन्दतः प्रार्थयस्व । इमा रामास्सरथास्सतूर्या नहीदृशा लम्भनीया मनुष्यैः । आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः ॥ २६ ॥**

**ये ये कामा** इति । छन्दतः यथेष्टमित्यर्थः । **इमा रामा** इति । रथवादित्रसहिता मया दीयमानाः स्त्रियो मनुष्याणां दुर्लभा इत्यर्थः । **आभिरिति** । आभिः मया दत्ताभिः परिचारिकाभिः पादसंवाहनादिशुश्रूषां कारयेत्यर्थः । **मरणमनु** । मरणात् मुक्तेःपश्चात्, मुक्तात्मस्वरूपमिति यावत् । मरणशब्दस्य देहवियोगसामान्यवाचिनोपि प्रकरणवशेन विशेषवाचित्वं न दोषायेति द्रष्टव्यम् ॥ २६ ॥

**श्वोभावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः । अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते ॥ २७ ॥**

एवं प्रलोभ्यमानोपि नचिकेताः अक्षुभितहृदय आह—**श्वोभावा** इति। **हे अन्तक!** त्वदुपन्यस्ता ये मर्त्यस्य कामाः ते **श्वोभावाः** । श्वः अभावः येषां ते तथोक्ताः । दिनद्वयस्थायिनो न भवन्तीत्यर्थः । सर्वेन्द्रियाणां यदेतत्तेजः तत् क्षपयन्ति । अप्सरः-प्रभृतिभोगा हि सर्वेन्द्रियदौर्बल्यावहा इति भावः । **अपि सर्वमिति** । ब्रह्मणोपि जीवितं स्वल्पं, किमुतास्मदादिजीवितम् । अतश्चिरजीविकापि न वरणार्हेति भावः । **वाहाः** रथादयः । तिष्ठन्त्विति शेषः ॥ २७ ॥

**न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्मचेत्त्वा । जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयस्स एव ॥ २८ ॥**

**न वित्तेनेति** । नहि वित्तेन लब्धेन कस्यचित्तृप्तिः दृष्टचरी । 'न जातु कामःका-

मानामुपभोगेन शाम्यति' इति न्यायादिति भावः । किञ्च, **लप्स्यामहे वित्तमिति॥** त्वां वयं दृष्टवन्तश्चेत् वित्तं प्राप्स्यामहे(मः) । त्वद्दर्शनमस्ति चेत् वित्तलाभे को भार इति भावः । तर्हि चिरजीविका प्रार्थनीयेत्यत्राह— **जीविष्यामो यावदिति** । यावत्कालं याम्ये पदे त्वमीश्वरतया वर्तसे । व्यत्ययेन परस्मैपदम्। तावत्पर्यन्तमस्माकमपि जीवनं सिद्धमेव । नहि त्वदाज्ञातिलङ्घनेन अस्मज्जीवितान्तकरःकश्चिदस्ति । वरलाभालाभयोरपि तावदेव जीवनमिति भावः । अतः 'येयं प्रेत' इति प्राक्प्रस्तुतो वर एव वरणीय इत्यर्थः ॥ २८ ॥

**अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्व तदास्थःप्रजानन् ।**
**अभिध्यायन् वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥२९॥**

**अजीर्यतामिति** । जरामरणशून्यानां मुक्तानां स्वरूपं ज्ञात्वा **प्रजानन्** विवेकी जरामरणोपप्लुतोऽयं जनः **तदास्थः** जरामरणाद्युपप्लुताप्सरःप्रभृतिविषयविषयकास्थावान्, **क्व**—कथं भवेदित्यर्थः । **अभिध्यायन्निति** । **वर्णाः** आदित्यवर्णत्वादिरूपविशेषाः, **रतिप्रमोदाः** ब्रह्मभोगादिजनितानन्दविशेषाः, तान् सर्वान् । **अभिध्यायन्** निपुणतया निरूपयन् । अत्यल्पे ऐहिके जीविते कः प्रीतिमान् स्यादित्यर्थः ॥ २९ ॥

**यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्सांपराये महति ब्रूहि**
**नस्तत् । योयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता**
**वृणीते ॥ ३० ॥**

॥ इति प्रथमवल्ली ॥

---

**यस्मिन्निति**। महति पारलौकिके यस्मिन् मुक्तात्मस्वरूपे संशेरते, तदेवमे ब्रूहि। **योयमिति । गूढं** आत्मतत्त्वमनुप्रविष्टः योयं वरः तस्मादन्यं नचिकेता न वृणीतेस्म इति श्रुतेर्वचनम् ॥ ३० ॥

॥ इति प्रथमवल्लीव्याख्या ॥

---

॥ अथ द्वितीयवल्ली ॥

हरिः ओं ॥ अन्यच्छ्रेयोऽन्यदुतैव प्रेयः ते उभे नानार्थे पुरुषꣳसिनीतः । तयोःश्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥ १ ॥

एवं शिष्यं परीक्ष्य तस्य मुमुक्षास्थैर्यं निश्चित्य तस्योपदेशयोग्यतां मन्वानः मुमुक्षां स्तौति—**अन्यच्छ्रेय** इति । अतिप्रशस्तं मोक्षवर्त्माप्यन्यत् । प्रियत्वास्पदं भोगवर्त्माप्यन्यत् । **ते**—श्रेयःप्रेयसी परस्परविलक्षणप्रयोजने सती पुरुषं **सिनीतः**—बध्नीतः । पुरुषं स्ववशतामापादयत इत्यर्थः । **तयोरिति** । तयोर्मध्ये **श्रेय आददानस्य**—मोक्षाय प्रयतमानस्य साधु-भद्रं-भवति । यस्तु प्रेयो वृणीते स पुरुषार्थाद्भ्रष्टो भवति । उ इत्यवधारणे ॥ १ ॥

श्रेयश्च प्रेयश्च मनुष्यमेतः तौ संपरीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ २ ॥

**श्रेयश्च प्रेयश्चेति** । श्रेयश्च प्रेयश्च **मनुष्यमेतः**—मनुष्यं प्राप्नुतः । **तौ** श्रेयःप्रेयःपदार्थौ सम्यगालोच्य नीरक्षीरे हंस इव पृथक्करोति । धिया रमत इति धीरः प्रज्ञाशाली, प्रेयोपेक्षया अभि—अभ्यर्हितं श्रेय एव वृणीते । मन्दमतिः योगक्षेमाद्धेतोः प्रेयो वृणीते । शरीरस्योपचयो योगः, क्षेमः परिपालनम् ॥ २ ॥

स त्वं प्रियान्प्रियरूपाꣳश्च कामान् अभिध्यायन्नचिकेतोऽत्यस्राक्षीः । नैताꣳसृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः ॥ ३ ॥

**स त्वं प्रियानिति** । तादृशस्त्वं स्वतो रूपतश्च **प्रियान्** काम्यमानान् स्त्र्यादीनित्यर्थः । दुःखोदर्कत्वदुःखमिश्रत्वादिदोषयुक्ततया निरूपयन् त्यक्तवानसीत्यर्थः । **नैतां सृङ्कामिति** । **वित्तमयीं** धनप्रायां **सृङ्कां** कुत्सितगतिं मूढजनसेवितां एतां नावाप्तवानसि । **यस्यामिति** । स्पष्टोऽर्थः ॥ ३ ॥

**दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता। विद्या-भीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्त ॥ ४ ॥**

**दूरमेत** इति । या अविद्येति ज्ञाता कामकर्मात्मिका याच विद्येति ज्ञाता वैराग्य-तत्त्वज्ञानमयी एते **दूरं** अत्यन्तं **विषूची** विषूच्यौ भिन्नगती परस्परविरुद्धे च । विद्याभीप्सिनं विद्यार्थिनं । विद्याभीप्सितमिति पाठे आहिताग्न्यादित्वान्निष्ठान्तस्य पर-निपातः । छान्दसत्वाद्वा । **न त्वा कामा** इति । कामा बहवोऽपि त्वां । **न लो-लुपन्त**—श्रेयोमार्गाद्विच्छेदं न कृतवन्तः । विषयवशगो न भवसीत्यर्थः । 'लुपस-दे' ति यङन्ताल्लङ् । छान्दसो यलोपः । यङ्लुगन्ताद्वा छान्दसमात्मनेपदं अड-भावश्च ॥ ४ ॥

**अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्य-मानाः । दन्द्रम्यमाणाः परियन्ति मूढाः अन्धेनैव नीयमाना यथाऽन्धाः ॥ ५ ॥**

'अविद्या याच विद्येति ज्ञाते' त्युपात्तमार्गद्वये अविद्यामार्गं निन्दति—**अविद्याया-मिति** । कामकर्मादिलक्षणायामविद्यायां मध्ये घनीभूत इव तमसि वर्तमानाः स्वयमेव प्रज्ञाशालिनः शास्त्रकुशलाश्चेति मन्यमानाः **दन्द्रम्यमाणाः** जरारोगादि-दुःखपीडिताः अविवेकिनः परिभ्रमन्ति । अन्यत् स्पष्टार्थम् । केचित्तु दन्द्रव्यमाणा इति पाठमाश्रित्य विषयकामाग्निना द्रुतचित्ता इत्यर्थं वर्णयन्ति ॥ ५ ॥

**न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढं । अयं लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे ॥ ६ ॥**

**न सांपराय**इति । परलोकसाधनव्यापारः अविवेकिनं प्रति न प्रकाशते । प्रमा-द्यन्तं अनवहितमनस्कं **वित्तमोहेन मूढं**—विषयाशावशीकृतमनोरथम् । **अयं लोको नास्तीति** । अयमेव लोकोऽस्ति परलोको नास्तीति मन्यमानः मत्क्रियमाणयातना-विषयो भवतीत्यर्थः । व्यासार्यैः 'संयमने त्वनुभूये' ति सूत्रे 'अयं लोको नास्ति पर उत मानी' ति पाठानुसारेण अयं च लोकःपरश्च लोको नास्तीत्यर्थो वर्णितः । तत्र पक्षे तस्येति शेषःपूरणीयः । चशब्दश्चाध्याहार्यः । मानीत्यस्य दुर्मानीत्यर्थः । शिष्ट-

परिग्रहाभावादयं लोको नास्तीत्यस्योपपत्तिर्द्रष्टव्या । (स) दुर्मानी पुनःपुनर्वशमापद्यत इति उत्तरत्र संबध्यते ॥ ६ ॥

**श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः ।**
**आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः ॥७॥**

**श्रवणायापी**ति । यःप्रसिद्धःपरमात्मा सः अनेकैःपुरुषैः श्रोतुमपि न लभ्यत इत्यर्थः । श्रवणलाभोपि महासुकृतफलमिति भावः । **शृण्वन्तोपी**ति । नहिश्रोतॄणां सर्वेषां परमात्मप्रतिपत्तिस्सुलभेति भावः । **आश्चर्यो वक्ते**ति । अस्य कुशलो वक्ता कुशलः प्राप्ता च दुर्लभ इत्यर्थः । **आश्चर्यो ज्ञाते**ति । कुशलेनाचार्येणानुशिष्टो ज्ञाताप्याश्चर्यः । 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ' इत्युक्तेरिति भावः ॥ ७ ॥

**न नरेणाऽवरेण प्रोक्त एषः सुविज्ञेयो बहुधा चिन्त्यमानः ।**
**अनन्यप्रोक्ते गतिरत्र नास्ति अणीयान् ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥**

**न नरेणावरेणे**ति । अवरेण अश्रेष्ठेन प्राकृतेन पाण्डित्यमात्रप्रयोजनवेदान्तश्रवणेन, **नरेण**—देहात्माभिमानिना एष आत्मा सुविज्ञेयो न भवति । कुतो हेतोः, **बहुधा चिन्त्यमानः** । वादिभिरिति शेषः । **अनन्यप्रोक्ते गतिरत्र नास्ति**—अनन्येन उच्यमानात्मनोऽनन्येन तदेकान्तिना ब्रह्मात्मसाक्षात्कारिणा प्रोक्ते आत्मनि यादृशी अवगतिः सा आत्मावगतिरवरेण प्रोक्ते नास्तीत्यर्थः । यद्वा अत्र संसारे गतिः चङ्क्रमणं नास्तीत्यर्थः । यद्वा अनन्यप्रोक्ते स्वयमवगते गतिः आत्मावगतिः नास्तीत्यर्थः । अन्यप्रोक्त इति पाठे अवरनरप्रोक्ते सति आत्मावगतिर्नास्तीत्यर्थः । ननु येन केनचिदुपदिष्टेप्यूहापोहशालिनस्स्यादेवेत्यत आह—**अणीयान् ह्यतर्क्यमणुप्रमाणात्** । यतो अणोरप्यणीयानात्मा अतस्तत्स्वरूपं तर्कागोचरम् ॥ ८ ॥

**नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ । यां त्वमापस्सत्यधृतिर्बताऽसि त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ॥ ९ ॥**

तदेवाह—**नैषा तर्केण मतिरि**ति । एषा आत्मविषयिणी मतिः तर्केण प्रापणीया नेत्यर्थः । अतः तर्ककुशलेनापि स्वयं ज्ञातुं न शक्येत्यर्थः । **प्रोक्ताऽन्येने**ति । हे

प्रेष्ठ ! प्रियतम, स्वस्मादन्येनैव गुरुणा उपदिष्टैव मतिः मोक्षसाधनज्ञानाय भवति । का पुनस्सा मतिरित्यत्राह—**यां त्वमाप** इति । यां मतिं **त्वमापः**—प्राप्तवानसि सिषाधयिषिततया निश्चितवानित्यर्थः । **सत्यधृतिरसि** । सत्या अप्रकम्प्या धृतिर्यस्य स तथोक्तः । बतेत्यनुकम्पायाम् । **त्वादृगिति** । त्वादृशश्शिष्यः अस्माकं भूयादित्यर्थः ॥ ९ ॥

**जानाम्यहꣳशेवधिरित्यनित्यं नह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।**
**ततो मया नाचिकेतश्चितोऽग्निः अनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥ १० ॥**

पुनरपि तुष्ट आह—**जानाम्यहमिति**। **शेवधिः** निधिः,कुबेराद्यैश्वर्यं। एवञ्जातीयकं कर्मफललक्षणमनित्यमिति जानामि । **नह्यध्रुवैरिति** । ध्रुवं **तत्** आत्मतत्त्वं **अध्रुवैः** अनित्यफलसाधनभूतैः अनित्यद्रव्यसाध्यैर्वा कर्मभिरित्यर्थः । **ततो मयेति** । एवं ज्ञातवता मया ब्रह्मप्राप्तिसाधनज्ञानोद्देशेन अनित्यैरिष्टकादिद्रव्यैर्नाचिकतोऽग्निश्चितः । तस्माद्धेतोर्नित्यफलसाधनं ज्ञानं प्राप्तवानस्मीत्यर्थः । अतः ब्रह्मप्राप्तेर्ज्ञानैकसाध्यत्वस्य न विरोधः ॥ १० ॥

**कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम् ।**
**स्तोमं महदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥ ११ ॥**

'त्वादृङ्नो भूयान्नचिकेतः प्रष्टे' ति पूर्वमन्त्रोक्तं नचिकेतसः श्रवणाधिकारं विवृणोति—**कामस्याप्तिमिति**। **क्रतोः**—कर्मणः **प्रतिष्ठां**-फलभूतां, **जगतः कामस्याप्तिं**—चतुर्मुखस्थानपर्यन्तसर्वलोकसंबन्धिस्त्र्यादिविषयात्मककामप्राप्तिं च दृष्ट्वा । मोक्षस्वरूपमाह — **आनन्त्यमभयस्य पारमित्यादिना** । अविनाशित्वमत्यन्तनिर्भयत्वमपहतपाप्मत्वसत्यसङ्कल्पत्वादिमहागुणगणरूपस्तोमं उरुकीर्तिं च स्थैर्यं च मोक्षगतं दृष्ट्वा लौकिकान् कामान् प्रज्ञाशालित्वात् त्यक्तवानसीत्यर्थः । यद्वा मोक्षरूपपरमात्मस्वरूप एव सर्वकामावाप्तिं तत्रैव सकलजगदाधारत्वं क्रतोरनन्तफलरूपताञ्चेत्येवं सर्वं परमात्मविषयतया योजनीयम् ॥ ११ ॥

**तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥ १२ ॥**

तृतीयं प्रश्नं प्रतिवक्ति—**तं दुर्दर्श**मित्यादिना मन्त्रद्वयेन । **दुर्दर्शं**—'श्रवणायापि बहुभिर्यो न लभ्यः' इत्युक्तरीत्या द्रष्टुमशक्यम् । **गूढं**—तिरोधायककर्मरूपाविद्यातिरोहितं सर्वभूतानुप्रविष्टं **गुहाहितं**—हृदयगुहावर्तिनं **गह्वरेष्ठं** अन्तर्यामिणं **पुराणं**—अनादिं **अध्यात्मयोगाधिगमेन**—विषयेभ्यः प्रतिसंहृत्य चेतस आत्मनि समवधानमध्यात्मयोगः । 'यच्छेद्वाङ्मनसी प्राज्ञः, यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सहे' त्यादिना वक्ष्यमाणः । तेन योयमधिगमः जीवात्मज्ञानं तेन हेतुना **देवं** परमात्मानं मत्वेत्यर्थः । जीवात्मज्ञानस्य परमात्मज्ञानहेतुत्वादिति भावः । हर्षशोकौ विषयलाभालाभप्रयुक्तहर्षशोकौ जहातीत्यर्थः ॥ १२ ॥

**एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य । स मोदते मोदनीयं हि लब्ध्वा विवृतं सद्म नचिकेतसं मन्ये ॥ १३ ॥**

**एतच्छ्रुत्वा संपरिगृह्ये**ति । **एतत्** आत्मतत्त्वं श्रुत्वा **संपरिगृह्य**—मननादिकं कृत्वेत्यर्थः । **धर्म्यं** कर्मसाध्यं शरीरादि **प्रवृह्य** पृथक्कृत्य परित्यज्येत्यर्थः । **एतं** स्वात्मभूतं **अणुं** सूक्ष्मतया चक्षुराद्यगोचरं 'अणीयान् ह्यतर्क्यमिति' निर्दिष्टं परमात्मानं देशविशेषे प्राप्य **सः** विद्वान् **मोदनीयं** प्रीतिविषयमपहतपाप्मत्वादिगुणाष्टकविशिष्टं स्वस्वरूपं लब्ध्वा **मोदते** आनन्दी भवतीत्यर्थः । 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, स तत्र पर्येति जक्षत् क्रीडन् रममाणः' इति श्रुत्यर्थोऽत्रानुसन्धेयः । एवं प्रश्नोत्तरमुक्त्वा नचिकेतसं मोक्षार्हत्वेन स्तौति- **विवृतं सद्मे**ति । नचिकेतसं प्रति ब्रह्मरूपं धाम विवृतद्वारं प्रवेशार्हं मन्ये इत्यर्थः । 'तस्यैष आत्मा विशति ब्रह्मधामे' ति श्रुतेः । ननु 'ब्रह्मजज्ञं देवमीड्यं विदित्वे' ति श्रुत्यैकार्थ्याय 'अध्यात्मयोगाधिगमेन मत्वे' त्यत्रापि परमात्मात्मकजीवः प्रतिपाद्यताम् । ततश्च तं दुर्दर्शमिति पूर्वखण्डोऽपि जीवपर एवास्तु । ततश्च 'श्रवणायापि बहुभिर्यो न लभ्यः' इति पूर्वसन्दर्भोपि परिशुद्धजीवस्वरूपपर एवास्तु, ततश्च 'आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति

श्रुत्वाप्येनं वेद न चैव कश्चिदि'ति परिशुद्धात्मविषयगीतावचनैकार्थ्यमपि उपपद्यत इति चेन्न । ब्रह्मजज्ञमिति मन्त्रे ब्रह्मजत्वरूपप्रक्रमश्रुतजीवलिङ्गबलेन चरमश्रुतदेवशब्दस्य देवात्मकत्वरूपार्थाश्रयणेपि 'तं दुर्दर्श' मिति मन्त्रे तादृशजीवलिङ्गाभावेन देवमित्यस्य देवात्मकमित्यर्थाश्रयणायोगात् । एतदेवाभिप्रेत्य भगवता भाष्यकृता 'गुहां प्रविष्टा' वितिसूत्रे 'परमात्मनस्तावत् 'तं दुर्दर्शं गूढमनुप्रविष्ट' मिति गुहाप्रवेशो दृश्यत' इत्युक्तम् । तथैवायं मन्त्रः परमात्मपरतया व्यासार्यैरपि विवृतः । गह्वरेष्ठमिति पदेन तु परमात्मनः गह्वरशब्दितदुर्विज्ञेयपरिशुद्धात्मस्वरूपशरीरकत्वमप्युक्तम् । इयांस्तु विशेषः—ब्रह्मजज्ञमितिमन्त्रे परमात्मात्मकपरिशुद्धजीवस्वरूपं प्रतिपाद्यते । तं दुर्दर्शमिति मन्त्रे तु जीवशरीरकपरमात्मस्वरूपं प्रतिपाद्यत इति न तयोरैकार्थ्यहानिः ॥ १३ ॥

**अन्यत्र धर्मादन्यत्राधर्मात् अन्यत्रास्मात्कृताकृतात् ।**
**अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥ १४ ॥**

'नह्यध्रुवैः प्राप्यते हि ध्रुवं तत्' 'एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य । स मोदते मोदनीयꣳहि लब्ध्वा' 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इति प्रदेशेषु धर्मफलविलक्षणतया ज्ञानसाध्यतया प्राप्यतया निर्दिष्टस्य प्राप्यस्य स्वरूपं च, उक्तप्रदेशेष्वेव धर्मविलक्षणतया मत्वेति प्रतिपन्नस्योपायस्य स्वरूपं च 'धीरो हर्षशोकौ जहाती'त्यत्र धीर इति प्रतिपन्नस्य प्राप्तुश्च स्वरूपं शोधयितुं पृच्छति—**अन्यत्र धर्मादि**त्यादिना—ननु भाष्ये 'देवंमत्वे'त्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्य 'अध्यात्मयोगाधिगमेने'ति वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च 'मत्वा धीरो हर्षशोकौ जहाती'ति निर्दिष्टस्य ब्रह्मोपासनस्य च स्वरूपशोधनाय पुनः पप्रच्छ अन्यत्र धर्मादिती'त्युक्तेः कथं तद्विरुद्धतया'धीर' इति निर्दिष्टस्य प्राप्तुरित्युच्यत इति चेत्—मैवं वोचः — 'अध्यात्मयोगाधिगमेने' ति वेदितव्यतया निर्दिष्टमात्मशब्दवाच्यं प्रजापतिविद्याप्रतिपन्नमुपास्यं प्राप्यभूतं परिशुद्धस्वरूपमेव । अतस्तस्यापि प्राप्यनिर्देशकत्वमेव । वस्तुगत्या तस्य प्राप्तुरभिन्नत्वात् प्राप्तुः प्रत्यगात्मनश्चेति भाष्यं न विरोत्स्यते । अतः 'प्रथमं तावत् प्रत्यगात्मनः स्वरूपमाह—न जायते म्रियते वा विपश्चिदिति' इत्युत्तरभाष्यमपि न विरोत्स्यते । नहि 'न जायते म्रियते वा विपश्चिदि'ति मन्त्रप्रतिपाद्यस्य

विपश्चिच्छब्दितपरिशुद्धस्वरूपस्य प्राप्तृरूपतोपपत्तिः । 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः, विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति मन्त्रप्रतिपाद्यस्यैव प्राप्तृरूपत्वात् । तथैव 'विशेषणाच्चे'ति सूत्रभाष्ये प्रतिपादितत्वात् । अत एव प्राप्यप्राप्त्रैकाधिकरण्यनिर्देशपरे गुहामन्त्रे 'छायातपा'वित्यत्र अज्ञत्ववाचिना छायाशब्देन निर्देशो दृष्टः । न तु विपश्चिच्छब्देन । अतः यथोक्त एवार्थः । अयं मन्त्रः व्यासार्यैः 'त्रयाणा'मिति सूत्रे विवृतः । '**धर्मः** उपायः **धर्मादन्यत्र**—प्रसिद्धोपायविलक्षण इत्यर्थः । **अधर्मः**—धर्मेतरः उपेयः । **अधर्मादन्यत्र** प्रसिद्धसाध्यविलक्षणं फलमित्यर्थः । **अस्मादि**ति बुद्धिस्थः तत्साधको विवक्षितः । स एवोपेता । सहि प्रसिद्धोपेतृ (साधक) विलक्षणः, साधकावस्थायामितरफलविरक्तत्वात्, फलदशायामाविर्भूतगुणाष्टकविशिष्टस्वरूपत्वाच्च। **कृताकृतादि**ति धर्मादीनां विशेषणम् । कृताकृताद्धर्मादेर्विलक्षणं भूताच्च भव्याच्च धर्मादेर्विलक्षणं यदित्यर्थः । इत्येकां व्याख्यां कृत्वा तस्मिन्पक्षे तु कृताकृतात् भूताद्भव्याच्च धर्मादन्यत्र तादृशादधर्मादन्यत्र तादृशादस्माच्चान्यत्र इत्यन्यत्रशब्दत्रयेणैवोपपत्तौ अन्यत्र भूताद्भव्याच्चेत्यन्यत्रशब्दवैयर्थ्यं, उपायस्य कालत्रयपरिच्छिन्नतया तत्र कालत्रयपरिच्छिन्नवैलक्षण्यानन्वयं च पर्यालोच्य यद्वेत्यादिना अपरा व्याख्या कृता । तदुच्यते—यद्वा धर्मादधर्माच्चान्यत्र यदिति उपासनप्रश्नः । पुण्यपापरूपसाधनविलक्षणत्वादुपासनस्य । कृताकृतात् भूताच्च भव्याच्चान्यत्र यदिति कालापरिच्छिन्नमुपेयं पृष्टम् । उपेतुरपि चेतनस्य नित्यत्वात् प्राप्यान्तर्भावाच्च । तत एव तस्यापि तन्त्रेण प्रश्नः । तदन्तर्गतं च प्राप्तुः स्वरूपमिति हि वक्ष्यते । तत्र यत्तच्छब्दौ त्रितयपराविति भावः' इति ॥

नन्वस्मिन्नपि पक्षे प्रष्टव्यद्वयपरत्वाश्रयणमपि क्लिष्टमेव । अन्यत्र धर्मादन्यत्राधर्मादिति प्रक्रमस्थान्यत्रशब्दद्वयसामानाधिकरण्यवत् अन्यत्रास्मात्कृताकृतादन्यत्र भूतादित्युपरितनान्यत्रशब्दद्वयस्यापि सामानाधिकरण्यस्यैव प्रतीतेः । यदि तत्र धर्माधर्मविलक्षणं यच्च, कालत्रयविलक्षणं यच्चेति चशब्दद्वयमश्रोष्यत तदा अन्यत्रशब्दयुगद्वयस्य स्वरसतः प्रतीतं सामानाधिकरण्यं पर्यत्यक्ष्यत । अतः प्रक्रमरीत्यनुसारिप्रतीतसमानाधिकरण्यभङ्गे कारणाभावात् अन्यत्र धर्मा-

दन्यत्राधर्मादित्ययमप्यंशः प्राप्यब्रह्मपर एवाऽस्तु । ननु 'नायमात्मा प्रवचनेन लभ्यो न मेधये' त्युपायविशेषप्रतिवचनदर्शनेनोपायविशेषप्रश्नस्याप्यत्रैवान्तर्भाव्यतया चशब्दाभावेप्यन्यत्रशब्दयुगद्वयस्य सामानाधिकरण्यं भञ्जनीयमितिचेन्न। प्रतिवचनेपि 'नायमात्मा प्रवचनेन लभ्य' इति प्रीतिरूपापन्नज्ञानैकलभ्यत्वलक्षणप्राप्यधर्मविशेषोपदेशस्यैव दर्शनेनोपायप्रधानप्रतिवचनादर्शनात् । 'नाशान्तमनसो वापि प्रज्ञानेनैनमाप्नुयात्' 'यस्त्वविज्ञानवान् भवति अमनस्कः सदाऽशुचिः। न स तत्पदमाप्नोती' ति प्रतिवचनदर्शनादन्यत्र धर्मादन्यत्रेति प्रसिद्धोपायविरोधिप्रश्न इत्यपि किं न स्यात् । प्राप्यस्य प्रीतिरूपापन्नज्ञानैकोपायत्वकथनेन उपाये प्रीतिरूपापन्नत्वरूपविशेषः फलिष्यतीति चेत्, फलतु नाम । नैतावतोपायस्य प्रश्नप्रतिवचनप्रधानविषयत्वं वक्तव्यमित्यस्ति । न हि 'किं देवदत्तभवन' मिति प्रश्नस्य वा 'बहुचम्पकालंकृतनिष्कुटं द्वारोपान्तलिखितशङ्खचक्रपद्मकं देवदत्तभवन' मिति तत्प्रश्नप्रतिवचनस्य वा निष्कुटद्वारोपान्तप्रधानकत्वं कश्चिदभ्युपैति । अतो अन्यत्रधर्मादन्यत्राधर्मादित्यपि अन्यत्रशब्दचतुष्टयसामानाधिकरण्यलिप्सया धर्माधर्मसाध्यविलक्षणब्रह्मविषयएवायमिति चेत्—

अत्रोच्यते—'असौ देवदत्तादुत्पन्नो न भवति, अपि तु यज्ञदत्ता' दिति वाक्यं श्रुत्वा 'देवदत्तादन्यं यं पश्यसि तं मे ब्रूही' ति प्रवृत्तस्य प्रति(?)वचनस्य देवदत्तान्ययज्ञदत्तपरत्ववत् लक्षणया देवदत्तपुत्रान्यप्रश्नपरत्वस्याप्रतीतेः। तद्वत् कर्मसाध्यं न, अपि तु ज्ञानसाध्यमित्युपदेशानन्तरप्रवृत्तस्य धर्मादन्यत्रेति प्रश्नस्य धर्मविलक्षणज्ञानरूपोपायपरत्वमेव युक्तम् । नतु धर्मशब्दलक्षणया धर्मसाध्यविलक्षणब्रह्मपरत्वम् । तथा अधर्मादन्यत्रेत्यत्रापि सामानाधिकरण्येनोपायपरत्वमेव निश्चितम् । कालत्रयपरिच्छिन्नविलक्षणवाचके उपरितनान्यत्रशब्दद्वये कालत्रयापरिच्छिन्नोपायपरामर्शासंभवात् सामानाधिकरण्यभङ्गेन प्राप्यपरत्वमेव युक्तम् । नीलो दीर्घो रक्तो ह्रस्वः कः इत्युक्ते नीलदीर्घपदयोः अविरोधात् सामानाधिकरण्यं सिद्ध्यति । रक्तह्रस्वयोश्च परस्पराविरोधात् सामानाधिकरण्यं सिद्ध्यति। नतु चतुर्णां चशब्दाभावेपि सामानाधिकरण्यं दृष्टम् । अपि तु पुरुषद्वयप्रश्नपरत्वमेव । एवमिहापि यच्छब्दान्वितचशब्दद्वयाभावेपि न सामानाधिकरण्यमव(गम्य)गाह्यते । अस्तु वा भवदुक्तरीत्या सामानाधिकरण्यम् । अथापि प्रश्नप्रतिवचनयोर्द्वितीयव्याख्यायां उपेयप्रश्ने उपेत्रन्तर्भाववत्

उपायस्याप्यन्तर्भूतत्वात् 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्चे'ति सूत्रनिर्दिष्टोपायोपेतृ प्रश्नप्रतिवचनस्य सुघटिततया क्षतेरभावात् 'तत्ते पदं सङ्ग्रहेण ब्रवीमि' इति पदशब्दित-प्राप्यस्यैव प्रतिवचनप्रतिपाद्यत्वस्य स्पष्टं प्रतीतेरित्यलं प्रसक्तानुप्रसक्त्या । प्रकृत-मनुसरामः ॥ १४ ॥

**सर्वे वेदा यत्पदमामनन्ति तपाᳪसि सर्वाणि च यद्वदन्ति ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदᳪसङ्ग्रहेण ब्रवीमि ।**
**ओमित्येतत् ॥ १५ ॥**

एवं पृष्टो मृत्युः 'न जायते म्रियत' इत्यादिना विस्तरेण प्रतिपिपादयिषुः इदानीं श्रोतुरादरातिशयसिद्ध्यर्थं प्राप्यवैभवं प्रकाशयन् सङ्ग्रहोक्तिं प्रतिजानीते—**सर्वे वेदा** इति। पद्यते गम्यत इति व्युत्पत्त्या पदशब्दः प्राप्यस्वरूपवाची । यत्स्वरूपं सर्वे वेदाः साक्षात्परम्परया वा प्रतिपादयन्तीत्यर्थः । अनेन—अस्या उपनिषदः प्रजापतिविद्यावत् परि-शुद्धात्मस्वरूपविषयतैवास्तु—'न जायते म्रियते वा विपश्चित्', 'हन्ता चेन्मन्यते हन्तु'मिति मन्त्रद्वयस्य परिशुद्धात्मस्वरूपपरत्वस्य सम्प्रतिपन्नत्वात् । 'अणोरणीयानि'ति मन्त्रद्वय(?)स्यापि 'अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्' । 'निर्व्यापारमनाख्येयं व्याप्तिमात्रमनूपमम्' इति स्मृतिवचनाभ्यां सर्वान्तःप्रवेशयोग्यातिसूक्ष्मतया व्यापक-तया च प्रतिपादिते प्रत्यगात्मनि उपपन्नत्वात् , 'सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तदि'ति गीतानुसारेण 'आसीनो दूरं व्रजति शयानो याति सर्वतः' इति वचन स्यापि तत्रैव युक्तत्वात्, 'ग्रसिष्णु प्रभविष्णु चे'त्युपबृंहणानुसारात् 'यस्य ब्रह्म च क्षत्रं चे'ति मन्त्रस्यापि तत्र सङ्गतार्थत्वात्, 'द्वितीयं विष्णुसंज्ञस्य योगिध्येयं परं पदं' 'प्रसूतिनाशस्थितिहेतुरीश्वरस्त्वमेव नान्यत् परमं च यत्पद'मिति स्मृत्यनुसारेण 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति मन्त्रस्यापि शुद्धात्मस्वरूपे सङ्गतार्थ-त्वात्, 'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गति'मिति स्मृत्यनुसारेण 'सा काष्ठा-सा परा गति'रिति मन्त्रस्यापि परिशुद्धात्मविषयत्वसंभावात्, 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरं'इति स्मृत्यनुसारेण 'एष सर्वेषु भूतेष्वि'ति मन्त्रस्यापि शुद्धस्वरूप-परत्वोपपत्तेः, 'पराञ्चि खानी'ति मन्त्रे परागर्थनिन्दाद्वारेण प्रत्यगर्थस्यैव प्रकरण-प्रतिपाद्यत्वाविष्करणात्, 'तिष्ठन्तं परमेश्वर'मिति गीतानुसारेण 'ईशानो भूत-

भव्यस्ये' ति मन्त्रस्यापि शुद्धात्मस्वरूपे सङ्गतार्थत्वात्, भेदप्रसक्तिमति प्रत्यगात्मस्वरूप एव 'नेह नाने' ति निषेधस्यापि सङ्गतार्थत्वात्, 'अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः' इति स्मृतिप्रत्यभिज्ञापकस्य 'वायुर्यथैको भुवनं प्रविष्ट' इति मन्त्रस्यापि शुद्धस्वरूपपरत्वसंभवात्, 'सर्वतः पाणिपाद'मिति गीताभाष्ये ब्रह्मणा परमसाम्यमापन्ने शुद्धात्मस्वरूपे सर्वतःपाणिपादादिकार्यकर्तृत्वं संभवतीति उपपादितत्वात्, 'एकं बीजं बहुधा यः कर.ती'ति मन्त्रस्यापि परिशुद्धपरत्वेऽनुपपत्त्यभावात्, तत्र 'न तत्र सूर्यो भाती' ति मन्त्रस्यापि 'न तद्भासयते सूयः' 'ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते' इति गीतावचनेन परिशुद्धात्मस्वरूपपरत्वस्य युक्तत्वात्, 'तं स्वाच्छरीरात्प्रवृहे'दिति औपसंहारिकमन्त्रस्य शुद्धात्मपरत्व एव स्वारस्यात् कृत्स्नाया अप्युपनिषदः प्रजापतिवाक्यवत् प्रत्यगात्मस्वरूपमात्रपरत्वोपपत्तौ प्रत्यगात्मपरमात्मरूपप्राप्यद्वयपरत्वक्लेशाश्रयणं वृथा—इति शङ्का प्रत्युक्ता। सर्ववेदप्रतिपाद्यस्यैव 'तत्ते पदं सङ्ग्रहेण ब्रवीमी'ति वक्तव्यत्वेन प्रतिज्ञानात् परमात्मस्वरूपप्रतिपादकवेदभागप्रतिपाद्यत्वस्य शुद्धस्वरूपे असंभावात्, शुद्धस्वरूपस्या(प्य)न्तर्यामिणः परमात्मस्वरूपस्य शुद्धस्वरूपप्रतिपादकभागेनापि प्रतिपाद्यत्वसंभवादिति द्रष्टव्यम्। **तपांसि सर्वाणि चेति। तपांसि**— तपःप्रधाना उपरितनभागा इति व्यासार्यैर्व्याख्यातम्। **यदिच्छन्तो ब्रह्मचर्यं चरन्ति।** ब्रह्मचर्यं—गुरुकुलवासस्त्रीसङ्गराहित्यादिलक्षणं यदिच्छन्तोऽनुतिष्ठन्ति। **तत्ते पदमिति।** सङ्गृह्यतेऽनेनेति सङ्ग्रहः शब्दः। प्राप्यवक्तव्यत्वप्रतिज्ञापरे अस्मिन्मन्त्रे अर्थात् प्रणवप्रशंसाया लाभात् 'प्रणवं प्रशंस्ये' ति भाष्यस्य च 'सर्वे वेदा' 'इत्यादिपादत्रयोक्तब्रह्मप्रतिपादकतया प्रशस्येत्यर्थः' इति श्रुतप्रकाशिकावचनस्य च नानुपपत्तिरिति द्रष्टव्यम्। सङ्क्षेपेण तत्प्रतिपादकं किमित्यत आह— **ओमित्येतदिति।** 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः' इति प्रणवस्य ब्रह्मवाचकत्वात् प्रणवावयवयोरकारमकारयोः परजीववाचितया उपायोपेत्रोरप्युपदिष्टत्वमस्तीति द्रष्टव्यम्॥ १५॥

**एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्।**
**एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्॥ १६॥**

एवं वाचकं प्रणवं द्वाभ्यां मन्त्राभ्यां स्तौति—**एतद्ध्येवाक्षरं ब्रह्मेति।** 'ओमित्यनेनैवाक्षरेण परं (म) पुरुषमभिध्यायीते' ति ब्रह्मप्राप्तिसाधनध्यानालंबनत्वादिदमे-

वाक्षरं ब्रह्मप्राप्तिसाधनत्वात् ब्रह्म । **एतद्ध्येवाक्षरं परम्** । जप्येषु ध्येयेषु च श्रेष्ठमित्यर्थः । **एतद्ध्येवाक्षरमिति** । एतदक्षरमुपासमानः(उपास्य) अनेनोपासनेन इदं फलं मे भूयादिति यत् कामयते तस्य तद्भवतीत्यर्थः ॥ १६ ॥

**एतदालम्बनं श्रेष्ठं एतदालम्बनं परम् ।**
**एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥**

**एतदालम्बनं श्रेष्ठम्**—एतदोंकाररूपमालम्बनं । श्रेष्ठं–ध्यानादेरिति शेषः । अत एव **एतदालम्बनं परम्**—एतदालम्बनकं ध्यानादि सर्वोत्कृष्टमित्यर्थः । उत्तरार्धस्य स्पष्टोऽर्थः ॥ १७ ॥

**न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।**
**अजो नित्यश्शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥१८॥**

प्रथमं तावत्प्रत्यगात्मस्वरूपमाह—**न जायते म्रियते वेत्यादिना** मन्त्रद्वयेन । इदं च प्रस्तुत्य व्यासार्यैरित्थं ह्युक्तम्—'इदं मन्त्रद्वयं तावदेकविषयम्, 'न हन्यते हन्यमाने शरीरे' इत्येतद्विवरणरूपत्वात् द्वितीयमन्त्रस्य । हन्ता चेदिति मन्त्रश्च जीवविषय एव । लोकस्य परमात्मनि हन्तृहन्तव्यभावप्रतिपत्त्यभावात् । परमात्मा हि प्रत्यक्षागोचरः । कथं तस्मिन्वध्यतादिप्रतिपत्तिः । अहमेनं हन्मि अयं मां हन्तुमागच्छतीति वध्यघातुकभावाभिमानो हि देहिनां जीवविषय एव । ननु 'नास्य जरयैतज्जीर्यती' तिवत् परमात्मनोपि हननप्रतिषेध उपपद्यते । सत्यम्, तत्र दहराकाशस्य देहान्तःस्थित्या शंकितविकारनिषेध उपपद्यते । इह तु लोकसिद्धा भ्रान्तिरनूद्य निरस्यते । न हि परमात्मनि वध्यघातुकभावभ्रान्तिः कस्याप्यस्ति । अतः अनुवादनिषेधावनुपपन्नौ । 'न जायत ' इति मन्त्रश्च तेनैकार्थः । अतः मन्त्रद्वयमपि जीवविषयकमेवे'ति । अक्षरार्थस्तु–**न जायते म्रियते वा विपश्चित्**—विपश्चित्त्वार्होऽयमिदानीमपि जननमरणशून्य इत्यर्थः । **नायं कुतश्चित्**—उत्पादकशून्यः । **न बभूव कश्चित्**—पूर्वमपि मनुष्यादिरूपेण जननशून्यः । न जायत इत्यत्र हेतुमाह–**अज** इति । न म्रियत इत्यत्र हेतुमाह—**नित्य** इति । न कुतश्चिदित्यत्र हेतुमाह–**शाश्वत** इति । पूर्वं न बभूवेत्यत्र हेतुमाह–**पुराण** इति ।

ननु कथमस्य नित्यत्वम् , शरीरान्तर्वर्तिनश्शरीरविनाशानुविनाशित्वावश्यंभावादित्यत आह – **न हन्यत** इति । स्पष्टोऽर्थः ॥ १८ ॥

**हन्ता चेन्मन्यते हन्तुꣳहतश्चेन्मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायꣳहन्ति न हन्यते ॥ १९ ॥**

तदेवोपपादयति–**हन्ता चेदि**ति । **हन्ताचेन्मन्यते हन्तुं**–अहमेनं वधि(हनि)-ष्यामीति देहात्मदृष्ट्या मन्यते चेदित्यर्थः । **हतश्चेन्मन्यते हतम्**–छिन्नदेहावयवः देहात्मदृष्ट्या आत्मानं हतोऽहमिति मन्यते चेदित्यर्थः । **उभौ तौ न विजानीतः** । आत्मस्वरूपमिति शेषः । **नायं हन्ति** । आत्मानमिति शेषः । **न हन्यते**— आत्मस्वरूपमिति शेषः । न च वेदान्तवेद्यपरिशुद्धात्मस्वरूपे कथं हननादिप्रसक्तितत् पूर्वकनिषेधाविति वाच्यम् । तस्यैव क्षेत्रीभूततया तत्प्रयुक्ततत्संभवादिति द्रष्टव्यम् ।

इमौ मन्त्रौ प्रस्तुत्य वियत्पादे चिन्तितम् । तत्र हि 'वायुश्चान्तरिक्षं चैतदमृत'मिति वाय्वन्तरिक्षयोर्नित्यत्वश्रवणेपि 'आत्मन आकाशस्संभूतः आकाशाद्वायुः ' इति तयोरुत्पत्तिश्रवणात् एकविज्ञानेन सर्वविज्ञानसिद्ध्यर्थं सर्वस्य वस्तुनो ब्रह्मविकारत्वस्यावश्याश्रयणीयत्वाच्च यथोत्पत्तिरङ्गीक्रियते, एवं जीवानां नित्यत्वश्रवणेपि 'तोयेन जीवान्विससर्ज भूम्यां' 'प्रजापतिः प्रजा असृजते'ति जीवानामपि सृष्टिश्रवणात् एकविज्ञानेन सर्वविज्ञानसिद्ध्यर्थं जीवस्यापि सृष्टिरभ्युप-गन्तव्येति पूर्वपक्षे प्राप्ते—'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः' इति सूत्रेण सिद्धान्तितम् । आत्मा नोत्पद्यते 'न जायते म्रियते वा विपश्चित' 'ज्ञाज्ञौ द्वावजा' वित्युत्पत्ति-निषेधश्रुतेः । ताभ्य एव श्रुतिभ्यः नित्यत्वावगमाच्च । नचोत्पत्तिश्रुतिसर्वविज्ञान प्रतिज्ञाविरोधश्शङ्क्यः । स्वरूपस्य नित्यत्वेऽपि ज्ञानसङ्कोचविकासलक्षणान्यथाभाव-रूपावस्थान्तरापत्तिसत्त्वेन उत्पत्तिश्रुतेः सर्वविज्ञानप्रतिज्ञायाश्चोपपत्तेः । उत्पत्ति-निषेधश्रुतेश्च स्वरूपान्यथाभावलक्षणोत्पत्त्यभावपरतया अविरोधात् । इयांस्तु विशेषः । चिदचिदीश्वराणां त्रयाणामपि अवस्थान्तरापत्तिलक्षणोत्पत्तिरूपो विकारोऽस्त्येव । तथाप्यचेतनानां स्वरूपान्यथाभावलक्षणा उत्पत्तिः । जीवानां तु सा नास्ति । अपितु ज्ञानसङ्कोचविकासलक्षणस्वभावान्यथाभावरूपा उत्पत्तिः । ईश्वरस्य तु तन्नियन्तृत्वाद्य-वस्थासत्त्वेपि उक्तलक्षणानिष्टविकारद्वयाभावात् 'नित्यो नित्याना'मिति परमात्मन

इतरविलक्षणनित्यत्वोक्तिरिति द्रष्टव्यम् । वर्णितश्च सूत्रार्थः ।

ननु 'न जायतेम्रियते वा' इति श्रुतिप्रतिषिद्धां जीवोत्पत्तिं 'वासुदेवात्सङ्कर्षणो नाम जोवो जायते 'इति प्रतिपादयतः पाञ्चरात्रस्य कथं प्रामाण्य' मिति चेत्—अस्याः शङ्कायास्तर्कपादे निराकृतत्वात् । तथाहि—वासुदेवात्संकर्षणो नाम जीवो जायत' इति जीवोत्पत्तिः प्रतिपाद्यते । सा च जीवे न संभवति । तथा 'सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायते' इति कर्तुर्जीवात्करणस्य मनसः उत्पत्तिः श्रूयमाणापि न संभवति । कर्तुर्जीवात्करणोत्पत्तेः 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि चे'ति मनसो ब्रह्मोत्पत्तिप्रतिपादकश्रुतिविरुद्धत्वादिति 'उत्पत्त्यसंभवात्' 'न च कर्तुः करण'मिति सूत्रद्वयेन पूर्वपक्षं कृत्वा 'विज्ञानादिभावे वा तदप्रतिषेधः' विप्रतिषेधाच्चे'ति सूत्राभ्यां सिद्धान्तितम् । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । विज्ञानं च तदादि च विज्ञानादि । ननु च 'क्यन्तो घु'रिति आदिशब्दस्य नित्यपुल्लिङ्गत्वात्कथमेतदिति चेत्—नायं घुः । अपि तु 'अद भक्षणे' इत्यस्मादावश्यकार्थे णिनिप्रत्यये 'आदि' इति रूपं सिद्ध्यति । तेन च निखिलजगत्संहर्तृत्वमुखेन कारणत्वं प्रतिपाद्यत इति द्रष्टव्यम् । आदि विज्ञानं परमात्मेत्यर्थः । 'सङ्कर्षणो नाम जीवो जायते' इति श्रुतस्य जीवशब्दार्थस्य तदभिमानिपरमात्मभावे सति शास्त्रप्रामाण्याप्रतिषेधस्सिद्ध्यति । परमात्मनश्च जननं नाम स्वेच्छाधीनशरीरपरिग्रहः । तस्मिन्नेव पाञ्चरात्रे 'स ह्यनादिरनन्तश्चे'ति जीवोत्पत्तेर्विशेषेण प्रतिषिद्धतया तद्विरुद्धाभिधानासंभवात् 'सङ्कर्षणो नाम जीवो जायत' इत्यनेन जीवाभिमानिसङ्कर्षणस्य इच्छाधीनशरीरपरिग्रहरूपोत्पत्तिः प्रतिपाद्यत इति न पाञ्चरात्राप्रामाण्यमिति सूत्रयोरर्थः ।

ननु सांख्यपाशुपताद्यधिकरणवदिदमप्यधिकरणं पाञ्चरात्रप्रामाण्यप्रतिषेधकं किं न स्यादिति चेत् — वेदोपबृंहणाय भारतसंहितां कुर्वता बादरायणेन—

'इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आमथ्य मतिमन्थानं दध्नो घृतमिवोद्धृतम् ॥

नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ।
आरण्यकं च वेदेभ्यः ओषधीभ्यो यथाऽमृतम् ॥

इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतान्तेन पाञ्चरात्रानुशब्दितम् ॥

इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
ऋग्यजुस्सामभिर्जुष्टं अथर्वाङ्गिरसैस्तथा ॥

भविष्यति प्रमाणं वै एतदेवानुशासनम् ।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ॥

अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः ।
सात्वतं विधिमास्थाय गीतस्सङ्कर्षणेन यः ॥

अस्मात्प्रवक्ष्यते धर्मान्मनुस्स्वायंभुवस्तथा ॥

इत्यादिभिर्वचनैः बहुषु स्थलेषु पाञ्चरात्रप्रामाण्यं प्रतिष्ठापितवता शारीरकशास्त्रे तत्प्रामाण्यं निराक्रियत इत्यस्यासङ्गतत्वात् । नन्वेवं—

'एवं तत्त्वमिदं कृत्स्नं सांख्यानां विदितात्मनाम् ।
यदुक्तं यतिभिर्मुख्यैः कपिलादिभिरीश्वरैः ॥

यस्मिन्नविभ्रमाः केचित् दृश्यन्ते मनुजर्षभ ।
गुणाश्च यस्मिन्बहवः दोषहानिश्च केवला ॥'

इति कापिलमतस्य भारते भ्रमादिदोषाभावप्रतिपादनात् 'सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते । यथागमं यथान्यायं निष्ठा नारायणः प्रभु'रिति सांख्ययोगपाशुपतादीनामपि नारायणनिष्ठत्वप्रतिपादनात् 'तमेव शास्त्रकर्तारः प्रवदन्ति मनीषिणः 'इति तच्छास्त्र-कर्तॄणामपि नारायणप्रतिपादकत्वस्य प्रतिपादनात् 'सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभि' रिति स्वर्वेषामप्यात्म-प्रमाणत्वप्रतिपादनाच्च 'सर्वं प्रमाणं हि तथा यथैतच्छास्त्रमुत्तम 'मिति पाञ्चरात्रदृष्टान्तेन इतरशास्त्राणामपि प्रामाण्यप्रतिपादनाच्च तत्पादे सांख्यपाशुपताद्यागमानामपि प्रामाण्यं न निराक्रियत इति चेत्—सत्यम् । भ्रमविप्रलिप्सादिराहित्यं शास्त्रकर्तॄणां परमतात्पर्यं नारायण एवेति च समानम् । तथापि अबहुश्रुततया तद्वक्तॄणां हृदयमजानन्तः

आपातप्रतिपन्नमेवार्थं तात्त्विकं मन्यमाना ये प्रत्यवतिष्ठन्ते, तान्प्रति सांख्याद्यागमानां आपातप्रतिपन्नार्थमात्रपरत्वमन्वारुह्य सूत्रकृता तन्निरसनं कृतम् । पाञ्चरात्रशास्त्रं तु परतत्त्वहितपुरुषार्थानामेवापाततोपि प्रतीतेः वेदविरुद्धनिमित्तोपादानभेदाद्यप्रतीतेश्च कृत्स्नं प्रमाणमेवेति नैकदेशेऽप्यप्रामाण्यशङ्कावकाश इति द्रष्टव्यम् । एवमेव व्यासार्यैरुक्तम् । प्रकृतमनुसरामः ॥ १९ ॥

**अणोरणीयान् महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् । तमक्रतुः पश्यति वीतशोको धातुप्रसादान्महिमानमात्मनः ॥ २० ॥**

एवं मन्त्रद्वयेन प्रत्यगात्मस्वरूपं विशोध्य तदात्मभूतपरमात्मस्वरूपमाह—**अणोरणीया**नित्यादिना । **अणोः**—सर्वाचेतनापेक्षया सूक्ष्माचेतनात् अणुतरः ततोपि सूक्ष्मः तदन्तः प्रवेशयोग्य इत्यर्थः । **महतः**—आकाशादेरपि महत्तरः स्वाव्याप्तवस्तुरहित इत्यर्थः । **अस्य जन्तोः**—'न जायते म्रियते वे'ति मन्त्रद्वयनिर्दिष्टस्य । **आत्मा**—अन्तःप्रविश्य नियन्तेत्यर्थः । अतश्च पूर्वमन्त्रद्वयनिर्दिष्टात् प्रत्यगात्मस्वरूपात् अणोरणीयानिति मन्त्रसन्दर्भप्रतिपाद्योऽन्य एवेति सिद्धम् । न च अस्य जन्तोरित्यस्य हृदयगुहावाचिना संबन्धसापेक्षेण गुहायामित्यनेनैवान्वितत्वेन नात्मेत्यनेनान्वय इति शङ्क्यम् । आत्मशब्दान्वितस्यैव काकाक्षिन्यायेनोभयत्रान्वये दोषाभावात् । 'मूलतः शाखां परिवास्योपवेषं करोति' इत्यत्र शाखां मूलतः परिवास्य मूलत उपवेषं करोतीति परिवासनान्वितस्यापि मूलत इत्यस्य उपवेषं करोतीत्यनेनापि अन्वयस्याङ्गीकृतत्वात् । जीवहृदयगुहावर्तित्वप्रतिपादनेऽपि जीवभेदसिद्धेश्च । नहि जीवस्यैव जीवगुहावर्तित्वप्रतिपादने प्रयोजनमस्ति । ननु 'न जायत' इत्युपन्यस्तस्यात्मनः जायमानवाचिजन्तुशब्देन परामर्शस्यानुपपन्नतया अस्य जन्तोरित्यस्य प्रत्यक्षादिसन्निधापितदेहपरताया एव वक्तव्यत्वेन तद्गुहाहित आत्मा प्रागुपन्यस्तो जीव एवास्तु । न च कर्तृत्वभोक्तृत्वादिविशिष्टतया सदा अहमिति भासमाने जीवे 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति' 'क इत्था वेद यत्र सः' इति उत्तरसन्दर्भप्रतिपाद्यदुर्विज्ञानत्वं कथमन्वेत्विति वाच्यम् । जीवस्य कर्तृत्वादिविशिष्टतया सर्वलोकविदितत्वेपि मुक्तप्राप्यब्रह्मस्वरूपविशिष्टतया दुर्ज्ञानत्वसंभवादिति चेन्न । 'प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिण' इति जन्तु-

शब्दस्य चेतनपर्यायतया प्रकृतजीववाचित्वसंभवात् । अस्येति शब्दस्य च पूर्वसन्दर्भोपस्थापितप्रत्यगात्मविषयत्वसंभवे प्रत्यक्षाद्युपस्थापितदेहविषयत्वाश्रयणस्यायुक्तत्वात् । अत्यन्ताणुत्वमहत्त्वयोः 'एष म आत्मान्तर्हृदये अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष म आत्मान्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः' इत्यादिषु परमात्मधर्मतया अणोरणीयानिति मन्त्रप्रतिपाद्यस्य जीवत्वशङ्काया असंभवात् । नुनु 'नेतरोऽनुपपत्ते' रिति सूत्रे 'सह ब्रह्मणा विपश्चिते' ति वाक्यश्रुतविपश्चित्त्वस्य ब्रह्मासाधारणलिङ्गत्वस्य भाष्ये प्रतिपादितत्वात् 'न जायते म्रियते वा विपश्चि' दिति मन्त्रस्यापि पररीत्या परमात्मपरत्वमेवास्तु । एवं सति 'अन्यत्र धर्मा' दिति प्रश्नस्य प्राप्यद्वयपरत्वं प्रतिवचनस्य प्राप्यद्वयपरत्वमाश्रित्य 'न जायत' इत्यादिमन्त्रद्वयस्य प्राप्यजीवस्वरूपपरत्वं, अणोरणीयानिति सन्दर्भस्य च परमात्मपरत्वमित्यादिपरिकल्पनक्लेशो नाश्रयणीय इति चेत्—न । हननादिप्रतिषेधाद्यनुपपत्त्या विपश्चिच्छब्दे मुख्यार्थत्यागस्यावश्यकत्वेन तन्मन्त्रद्वयस्याणोरणीयानित्यादिमन्त्रसन्दर्भस्य च एकविषयत्वासंभवात् । शिष्टमुत्तरत्र स्पष्टयिष्यते । **तमक्रतुं पश्यतीति** । **तं** — तादृशं परमात्मानं **अक्रतुः** — काम्यकर्मादिरहितस्सन् धातोः धारकस्य परमात्मनः प्रसादात् **आत्मनः महिमानं**—महत्त्वसंपादकं स्वसार्वज्ञ्यादिगुणाविर्भावहेतुभूतं परमात्मानं यदा पश्यति तदा वीतशोको भवतीत्यर्थः । द्युभ्वाद्यधिकरणे 'जुष्टं यदा पश्यत्यन्यमीशं' इति मन्त्रखण्डं प्रस्तुत्य 'अयं यदा स्वस्मादन्यं सर्वस्येशं प्रीयमाणमस्येश्वरस्य महिमानं च निखिलजगन्नियमनरूपं पश्यति तदा वीतशोको भवती' ति भगवता भाष्यकृता व्याख्यातत्वात् तदनुसारेणापि परमात्मनः निखिलजगन्नियमनरूपं महिमानं च यः पश्यति स वीतशोको भवतीत्यर्थः । धातुप्रसादाद्वीतशोको भवतीति वान्वयः । 'प्रसीदत्यच्युतस्तस्मिन्प्रसन्ने क्लेशसंक्षय' इति स्मृतेरिति द्रष्टव्यम् । 'अक्रतुं पश्यति धातुःप्रसादान्महिमानमीशम्' इति पाठे—**अक्रतुं**—कर्मकृतोत्कर्षापकर्षशून्यमित्यर्थः । **धातुः**—भगवतः ॥ २० ॥

**आसीनो दूरं व्रजति शयानो याति सर्वतः । कस्तं मदामदं**
**देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥**

धातुप्रसादशब्दितभगवदनुग्रहशून्यस्य परमात्मतत्त्वमत्यन्तालौकिकत्वाद्दुरधिगममिति दर्शयति—**आसीनो दूरं व्रजति शयानो याति सर्वत** इति—सर्वात्म-

कत्वेन इतरत्र विरुद्धतया प्रतीयमाना अप्यासीनत्वदूरगन्तृत्वादिधर्मा जीवद्वारा तत्र सन्तीति भावः । **कस्तमिति** । हर्षाहर्षविरुद्धधर्ममध्यस्थं तं परमात्मप्रसादानुगृहीत-मादृशजनादन्यः को वा ज्ञातेत्यर्थः ॥ २१ ॥

**अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं**
**मत्वा धीरो न शोचति ॥ २२ ॥**

**अशरीरमिति** । कर्मकृतशरीररहितं, **अनवस्थेषु**—अस्थिरेषु, नित्यत्वेन तत्र स्थितं **महान्तं विभुं**—महावैभवशालिनं आत्मानं मत्वा धीरो न शोचति ॥ २२ ॥

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूꣳ स्वाम् ॥२३॥**

ईदृशात्मप्राप्त्युपायं दर्शयति—**नायमात्मेति** । अत्र प्रवचनशब्देन मननस्यैव ग्रहीतुमुचितत्वादध्यापनरूपस्य प्रवचनस्य हेतुत्वाप्रसक्तेश्च तथैव व्यासार्यैर्विवृतत्वाच्च प्रवचनं मननम् । **यमेवैष वृणुते तेन लभ्यः** । एषः परमात्मा यं साधकं प्रार्थयते तेन लभ्यः प्रार्थनीयपुंसा लभ्य इत्यर्थः । तत्प्रार्थनीयत्वं च तत्प्रियतमस्यैव पुंसः । तत्प्रियतमत्वं च तत्प्रीतिमत एव । ततश्च भगवद्विषयिणी उपासकस्य प्रीतिः भगवत उपासके प्रीतिमुत्पाद्य तत्प्राप्तिहेतुर्भवतीत्यर्थः । **तस्यैष आत्मा विवृणुते तनूं स्वाम्**—तस्य उपासकस्य एष आत्मा परमात्मा स्वरूपं प्रकाशयति स्वात्मानं प्रयच्छतीत्यर्थः । वृणुते इति पाठेपि स एवार्थः ॥ २३ ॥

**नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो**
**वापि प्रज्ञानेनैनमाप्नुयात् ॥ २४ ॥**

परमात्मप्राप्तिहेतुभूतोपासनाङ्गतया कांश्चिद्धर्मानुपदिशति—**नाविरतो दुश्चरिता-दिति**। परदारपरद्रव्यापहारादनिवृत्तः अनुपशान्तकामक्रोधवेगः नानाविधव्यापारविक्षिप्त-तयाऽनवहितचित्तः अनिगृहीतमनाश्च **एनं**—परमात्मानं प्रज्ञानेन नाप्नुयादित्यर्थः । पुरुषार्थस्यैवानृतवदननिषेधस्य दर्शपूर्णमासप्रकरणे क्रत्वङ्गतया 'नानृतं वदे' दिति निषेधवत् पुरुषार्थस्यापि दुश्चरितविरत्यादेरुपासनाङ्गतया विधानमुपपद्यते । ततश्च यस्तु पुरुषार्थमपि दुश्चरितनिषेधमतिलङ्घ्य परमात्मोपासनमविगुणं चिकीर्षति तस्य दुश्चरितनिषेधरूपाङ्गवैगुण्यादुपासनसाद्गुण्यं न सिद्ध्यतीत्यर्थः ॥ २४ ॥

**यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २५ ॥**

॥ इति द्वितीया वल्ली ॥

---

**यस्य ब्रह्मचेति। ब्रह्म च क्षत्रं च**—ब्रह्मक्षत्राख्यवर्णद्वयोपलक्षितकृत्स्नचराचरात्मकमिदं जगत् । **यस्य ओदनो भवति**—यस्य विनाश्यो भवतीत्यर्थः । यस्य मृत्युः स्वयमद्यमानत्वे सति अन्यस्यादनहेतुर्भवति, **सः** निखिलचराचरसंहर्ता परमात्मा **यत्र** यस्मिन् प्रकारे स्थितः यत्प्रकारविशिष्टः तं प्रकारमित्थमिति को वेदेत्यर्थः । ननु ब्रह्मक्षत्रपदेन कृत्स्नचराचरग्रहणे किं बीजमिति चेदुच्यते । ब्रह्म च क्षत्रं च ओदन इत्युक्ते ब्राह्मणक्षत्रियवर्णयोः किंचित्प्रति ओदनशब्दमुख्यार्थत्वासंभवात् ओदनशब्देन भोग्यत्वं वा विनाश्यत्वं वा लक्षणीयम् । न हि ब्रह्मक्षत्रमात्रभोक्ता तन्मात्रसंहर्ता वा कश्चिज्जीवो वा परमात्मा वाऽस्ति। नन्वन्तरादित्यविद्यायां 'ये चामुष्मात्पराञ्चो लोकास्तेषाञ्चेष्ट' इति सर्वलोकेश्वरे परमात्मनि उपासनार्थं लोकविशेषेशितृत्वश्रवणवत् सर्वसंहर्तर्यपि परमात्मनि ब्रह्मक्षत्रसंहरणमुपासनार्थमुपदिश्यतामितिचेन्न । तद्वदस्योपासनाप्रकरणत्वासंभवात् । अतः ब्रह्मक्षत्रग्रहणस्य चराचरमात्रोपलक्षणत्वं युक्तम् । उक्तं च सूत्रकृता 'अत्ता चराचरग्रहणात्' इति। नन्वेवमपि ओदनशब्देन किमिति विनाश्यत्वं लक्ष्यते । गौणत्वमपि शब्दस्य साधारणगुणमपहाय असाधारणगुणेनैव निर्वाह्यम् । नह्यग्निर्माणवक इत्यत्र अग्निशब्देन पैङ्गल्यादेरिव द्रव्यत्वादेरुपस्थितिरस्ति । अत एव 'प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातृणां प्र यजमानस्ये'त्यध्वर्युप्रैषे उद्गातृशब्दस्य बहुवचनानुरोधेन बहुषु वृत्तौ वक्तव्यायां षोडशर्त्विक्साधारणाकारं विहाय उद्गातृगणमात्रलक्षणा पूर्वतन्त्रे वर्णिता । तद्वदिहापि ब्रह्मक्षत्रयोरोदनशब्दमुख्यार्थत्वासंभवेपि भोज्यत्वभोग्यत्वरूपान्तरङ्गाकारस्यैव लक्षणयाऽपि ग्रहणं युक्तम् । नत्वत्यन्तबहिरङ्गस्य विनाश्यत्वाकारस्य, येन निखिलचराचरसंहर्ता परमात्माऽत्र वाक्ये प्रतीयेतेति चेत् उच्यते । यद्यपि विनाश्यत्वं साधारणाकारः, तथापि मृत्युर्यस्योपसेचनमिति वाक्यशेषानुरोधात् साधारणोऽपि गौण्या वृत्त्या लक्षयितुमुचितः । ननु उपसेचनशब्दापेक्षया ओदनशब्दस्य मुख्यत्वात् ओदनशब्दस्वारस्यानुरोधेन असाधारणाकाररूपभोग्यत्वे लक्षिते जघन्यमुपसेचनपदमबाधकत्वाभिप्रायेण कथंचिन्नीय-

ताम् । अतः ब्रह्मक्षत्रभोक्ता यः यस्य च मृत्युरवाधकः सोऽस्मिन्मन्त्रे प्रतिपाद्यः भोक्तृत्वं च जीवस्यैवेति स एवास्मिन्मन्त्रे प्रतिपाद्यतामिति चेत्—उच्यते। उपसेचनत्वेन रूपितस्य मृत्योः ओदनत्वरूपितेन ब्रह्मक्षत्रशब्दितेन दध्यन्नवत् प्रतीतसम्बन्धस्य सर्वात्मना बाधप्रसङ्गात् । नहि यस्य ब्रह्म क्षत्रं च भोग्यं यस्य च मृत्युरबाधक इत्युक्ते मृत्योः ब्रह्मक्षत्रस्य च सम्बन्धः प्रतीयते । अतः उपसेचनशब्दस्य ओदनशब्दापेक्षया जघन्यत्वेपि अबाधकत्वरूपसाधारणगुणं विहाय स्वयमद्यमानत्वे सति अन्यादनहेतुत्वरूपासाधारणरूप एव ग्राह्यः । ततश्च एकवाक्यान्तर्गतचरमश्रुतोपसेचनपदानुसारेण ओदनशब्देनापि विनाश्यत्वमेव लक्षणीयम् । स्वबुद्ध्युपस्थापनीयविशेषाकाररूपगुणग्रहणादपि एकवाक्यतापन्नपदान्तरोपस्थापितगुणग्रहणस्यैव बुद्धिलाघवेन एकवाक्यतासामर्थ्यानुरोधेन च न्याय्यत्वादित्यस्यार्थस्य अत्त्रधिकरणे निर्णीतत्वादित्यलं पल्लवितेन ॥ २५ ॥

॥ इति द्वितीयवल्लीव्याख्या ॥

॥ अथ तृतीया वल्ली ॥

**हरिः ओं ॥ ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ १ ॥**

'क इत्था वेद यत्र सः' इति अस्य दुर्ज्ञानत्वे, अत्र इत्थमास्ते इत्यस्यार्थस्य दुर्बोधत्वेन न वयं तदुपासने शक्ताः इति मन्यमानं प्रति उपास्योपासकयोरेकगुहानुप्रवेशेन परमात्मनस्सूपास्यत्वाद्वयमपि उपासितुं शक्ता इति द्वाभ्यां मन्त्राभ्यां दर्शयति— **ऋतं पिबन्ता**वित्यादिना । सत्यपदवाच्यावश्यंभाविकर्मफलमनुभवन्तौ सुकृतसाध्ये लोके अस्मिन्नेव लोके वर्तमानौ हृदयकुहरं प्रविष्टौ तत्रापि परमाकाशे **परार्ध्ये** — परार्धं सङ्ख्याया उत्तरावधिः तदर्हतीति परार्ध्यम्, उत्कृष्ट इत्यर्थः । तादृशे हार्दाकाशे वर्तमानौ । छायातपशब्दाभ्यां ज्ञाज्ञौ लक्ष्येते । अज्ञशब्देन जीवनिर्देशस्य चायमभिप्रायः । उपास्योपासकयोरेक-

गुहावर्तित्वे तयोरेव प्राप्यप्राप्तृतया प्राप्यस्य च तत्प्राप्तिसाधनरथत्वेन रूपिते शरीरेऽवस्थानमयुक्तम्। न हि रथेन प्राप्तव्योऽर्थः रथस्थो भवतीति शङ्का न कार्या। प्राप्यस्य परमात्मनः तत्रावस्थितत्वेपि जीवस्य 'पराभिध्यानात्तु तिरोहित' मित्युक्तरीत्या परमात्मसङ्कल्पमूलकर्मरूपाविद्यावेष्टिततया तदनुभवलक्षण-तत्प्राप्तेरभावेन प्राप्तृप्राप्ययोर्जीवपरयोः रथत्वरूपितशरीरान्तर्वर्त्यैकगुहावर्तित्वकथने नानुपपत्तिरिति। **पञ्चाग्नयो ये च त्रिणाचिकेताः**—पञ्चाग्निशुश्रूषापरिशुद्धान्तः-करणाः। **त्रिणाचिकेताः**—उक्तोऽर्थः। एवंभूता ब्रह्मविदो वदन्तीत्यर्थः। केवलपञ्चाग्नित्रिणाचिकेतानामीदृशपरमात्मप्रतिपादनासामर्थ्यात् ब्रह्मविदामेव पञ्चाग्नि-त्वत्रिणाचिकेतत्वे विशेषणे। अस्य मन्त्रस्य जीवपरमात्मपरत्वं सूत्रितं– 'गुहां प्रविष्टावात्मानौ' विति। ननु कर्मफलभोगशून्ये परमात्मनि 'ऋतं पिबन्ता'विति निर्दिष्टकर्मभोक्तृत्वासंभवात्, सुकृतसाध्यलोकवर्तित्वगुहावच्छिन्नत्वयोस्सर्वगते परस्मिन् ब्रह्मण्यसंभवात्, छायातपनिर्दिष्टाप्रकाशत्वप्रकाशत्वयोरपि जीवपरमात्मपरत्वे असंभवात्, बुद्धिजीवपरत्वे तु तस्य सर्वस्याप्युपपत्तेः, कर्मफलभोगकरणे कर्तृत्वोपचारेण पिबन्ता-विति निर्देशस्याप्युपपत्तेः बुद्धिजीवपरत्वमेवास्य मन्त्रस्य युज्यत इति चेत्—एवमेवहि 'गुहां प्रविष्टा' विति सूत्रे आशङ्क्य संख्याश्रवणे सत्येकस्मिन् संप्रतिपन्ने द्विती-याकांक्षायां प्रतिपन्नजातिमुपजीव्य व्यक्तिविशेषपरिग्रहे बुद्धिलाघवाद्विजातीयपरिग्रहे जातिव्यक्तिबुद्धिद्वयापेक्षया गौरवात् संप्रतिपन्नजातीयपरिग्रहो युक्तः। लोके 'ग्यस्य गोर्द्वितीयोऽन्वेष्टव्यः' इत्यादौ तथा दर्शनात्। तथाच ऋतपानलिङ्गावगतस्य जीवस्य द्वितीयः चेतनत्वेन तत्सजातीयः परमात्मैव ग्राह्यः। परमात्मनः प्रयोजककर्तृतया पिबन्ताविति निर्देशस्यापि संभवात्, अन्तःकरणे स्वतन्त्रकर्तृत्व-प्रयोजककर्तृत्वयोरभावेन पिबन्ताविति निर्देशस्य सर्वथाप्यसंभवात्, सर्वगते ब्रह्मणि सुकृतसाध्यलोकवर्तित्व-स्यापि संभवात्, अस्मिन्नेव प्रकरणे 'गुहाहितं गह्वरेष्ठ 'मिति परमात्मनो गुहाप्रवेश-श्रवणेन गुहाप्रवेशस्याप्युपपत्तेः, छायातपशब्दाभ्यां किञ्चिद्ज्ञसर्वज्ञयोः प्रतिपादन-संभवात् जीवपरमात्मपर एवायं मन्त्र इति समर्थितत्वात् न त्वदुक्तशङ्कावकाशः। 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्व' मिति पैङ्गिरहस्यब्राह्मणानुसारेण 'द्वा सुपर्णे 'ति मन्त्रस्य बुद्धिजीवपरत्वात्, 'इयदामननात्' इत्यधिकरणे ऋतं पिबन्ताविति मन्त्रस्य 'द्वा सुपर्णे 'ति मन्त्रैकार्थ्यस्य प्रतिपादितत्वात् अयमपि मन्त्रः बुद्धिजीवपर इत्यस्या-

इशङ्कायाः 'गुहां प्रविष्टावात्माना' विति सूत्रकृतैव निराकृतत्वात् । किञ्च जीवे गुहाप्रवेशस्य बुद्ध्युपाधिकतया स्वतःप्रवेशवत्या बुद्ध्या सह जीवस्य 'गुहां प्रविष्टा' विति गुहाप्रवेशवर्णनं न सङ्गच्छते। उपष्टंभकाधीनगुरुत्वशालिनि सुवर्णे गुरु सुवर्णमिति व्यवहारसम्भवेऽप्युपष्टम्भकसुवर्णे गुरुणी इति व्यवहारादर्शनात् । अत एव परपक्षे सूत्रानुसारेण अस्य मन्त्रस्य जीवपरमात्मपरतया कृतं योजनान्तरमप्यनुपपन्नम् । 'अनेन जीवेनात्मनानुप्रविश्ये' ति श्रुत्यनुसारेण परमात्मनो जीवभावेनानुप्रवेशेपि परमात्मरूपेणानुप्रवेशाभावात् जीवपरमात्मानौ गुहां प्रविष्टाविति निर्देशानुपपत्तेः । जीवभावेन ब्रह्मणस्संसारमभिप्रेत्य ब्रह्म संसरतीति व्यवहारसत्त्वेपि जीवब्रह्मणी संसरत इति व्यवहारासंभवात् । 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति, कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति वचनानुसारेण प्रति(परि)गृहीते अविद्याया वा अन्तःकरणस्य वा जीवोपाधित्व-मिति पक्षद्वयेपि नाविद्यान्तःकरणयोः प्रतिबिम्बोपाधित्वं युज्यते। स्वच्छद्रव्यप्रतिहति-परावृत्तनायनरश्मिगृह्यमाणस्यैव प्रतिबिम्बशब्दार्थतया अचाक्षुषस्य चैतन्यस्य प्रति-बिम्बत्वासंभवेन अविद्याप्रतिबिम्बोऽन्तःकरणप्रतिबिम्बो वा जीव इत्याश्रयणायोगात् । अतोऽविद्यावच्छिन्नः अन्तःकरणावच्छिन्नो वा जीव इति पक्षद्वयमेव परिशिष्यते । तत्र च हृदयगुहायां अविद्यान्तःकरणाभ्यामवच्छिन्नत्वेन अनवच्छिन्नपरमात्मनो गुहाप्रवेशवर्णनश्रुतेर्वाऽन्तर्यामिब्राह्मणस्य वा नाञ्जस्यमित्यलमतिचर्चया। प्रकृत-मनुसरामः ॥ १ ॥

**यस्सेतुरीजानानामक्षरं ब्रह्म यत्परम् । अभयं तितीर्षतां पारं नाचिकेतꣳ शकेमहि ॥ २ ॥**

**यस्सेतुरिति**। यः सेतुः—आधारभूतः कर्मफलप्रद इत्यर्थः । ईजानानामिति कानजन्तः शब्दः । **अक्षरं ब्रह्म यत्परं**—यन्निर्विकारं परं ब्रह्म । **अभयं तितीर्षतां पारं**—संसारसागरं तितीर्षतां निर्भयं दृढं तीरं। **नाचिकेतं शकेमहि**—नाचिकेताग्निप्राप्यमुपासितुं शक्ताः स्म इत्यर्थः । शकेर्व्यत्ययेन शप् । नाचिकेतं शकेमहीत्यस्य मन्त्रखण्डस्य तथैव भाष्यकृता व्याख्यातत्वात्। अतः दुरुपास्यत्वबुद्ध्या न भेतव्यमिति भावः ॥ २ ॥

**आत्मान१ँ रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥**

'आत्मानं रथिनं विद्धी' त्यादिना 'सोध्वनः पारमाप्नोती'त्यन्तेन संसाराध्वपारभूतवैष्णवपरमपदप्राप्तौ परिकरमुपदिशन् प्राप्तृस्वरूपमुपदिशति—**आत्मानं रथिनं विद्धीति** । शरीराधिष्ठातारं रथिनं विद्धि । शरीरमेव च रथं विद्धीत्यर्थः । बुद्धिशब्दिताध्यवसायाधीनत्वाद्देहप्रवृत्तेः तस्यास्सारथित्वमिति भावः । **प्रग्रहः**—रशना ॥

**इन्द्रियाणि हयानाहुर्विषया१ँस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥**

**इन्द्रियाणि हयानाहुः**—स्पष्टोर्थः । **विषयांस्तेषु गोचरान्** – तेषु इन्द्रियेषु हयत्वेन रूपितेषु **गोचरान्** मार्गान् शब्दादिविषयान् विद्धीत्यर्थः । रथसारथिहयप्रग्रहत्वेन रूपितानां शरीरेन्द्रियमनोबुद्धीनामभावे रथित्वेन रूपितस्योदासीनस्यात्मनो गमनरूपलौकिकवैदिकक्रियाकर्तृत्वमेव नास्तीत्येतत् सुप्रसिद्धत्वेन दर्शयति—**आत्मेन्द्रियेति** । आत्मशब्दो देहपरः । मनश्शब्दस्तत्कार्यबुद्धेरप्युपलक्षकः । पूर्वमन्त्रे बुद्धेरपि सारथित्वेन निर्दिष्टत्वात् । भोक्ता कर्तृत्वभोक्तृत्ववानित्यर्थः । नहि केवलस्यात्मनः कर्तृत्वं भोक्तृत्वं वाऽस्तीति भावः ॥ ४ ॥

**यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥**

**यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥**

शरीरादेः रथत्वादिरूपणस्य प्रयोजनमाह—**यस्त्वविज्ञानवानित्यादिना** मन्त्रद्वयेन। लोके हि समीचीनसारथिप्रग्रहवतः अश्वा वशीकृता भवन्ति। एवं सारथिप्रग्रहत्वेन रूपितयोर्विज्ञानमनसोस्सामीचीन्ये अश्वत्वेन रूपितानि इन्द्रियाणि वश्यानि भवन्ति । नान्यथेत्यर्थः ॥ ५+६ ॥

**यस्त्वविज्ञानवान्भवत्यमनस्कस्सदाऽशुचिः । न स तत्पदमाप्नोति स१ँसारं चाधिगच्छति ॥ ७ ॥**

**यस्तु विज्ञानवान्भवति समनस्कस्सदा शुचिः। स तु तत्पद-
माप्नोति यस्माद्भूयो न जायते ॥ ८ ॥**

हयत्वेन रूपितानामिन्द्रियाणां वशीकरणतदभावयोः प्रयोजनं दर्शयति मन्त्रद्वयेन— **यस्त्वविज्ञानवानित्यादिना** । **अमनस्कः**—अनिगृहीतमनाः । अत एवाशुचिः सर्वदा विपरीतचिन्ताप्रवणत्वादित्यर्थः। न केवलं जिगमिषितप्राप्त्यभावमात्रं, प्रत्युत गहनं संसारकान्तारमेव प्राप्यतीत्यर्थः ॥ ७+८ ॥

**विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोध्वनः पारमाप्नोति
तद्विष्णोः परमं पदम् ॥ ९ ॥**

किं तत्पदमित्याकांक्षायां तत्पदं दर्शयन्नुपसंहरति— **विज्ञानसारथिरिति**। समीचीनविज्ञानमनश्शाली संसाराध्वपारभूतं परमात्मस्वरूपं प्राप्नोतीत्यर्थः ॥ ९ ॥

**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसश्च परा
बुद्धिर्बुद्धेरात्मा महान्परः ॥ १० ॥**

**महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चि-
त्सा काष्ठा सा परा गतिः ॥ ११ ॥**

वशीकार्यत्वाय रथादिरूपितेषु शरीरादिषु यानि येभ्यो वशीकार्यतायां प्रधानानि तान्युच्यन्ते—**इन्द्रियेभ्यः परा** इत्यादिमन्त्रद्वयेन। अस्य मन्त्रद्वयस्यार्थो भगवता भाष्यकृता आनुमानिकाधिकरणे उक्तः। इत्थं हि तत्र भाष्यम्—'तेषु रथादिरूपित-शरीरादिषु यानि येभ्यो वशीकार्यतायां प्रधानानि तान्युच्यन्ते इन्द्रियेभ्यः परा इत्यादिना। तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यो गोचरत्वेन रूपिता विषया वशीकार्यत्वे पराः। वश्येन्द्रियस्यापि विषयसन्निधाविन्द्रियाणां दुर्निग्रहत्वात्। तेभ्योपि परं प्रग्रहरूपितं मनः। मनसि विषयप्रवणे विषयासन्निधानस्याप्यकिंचित्करत्वात्। तस्मादपि सारथित्वरूपिता बुद्धिः परा। अध्यवसायाभावे मनसोप्यकिंचित्करत्वात्। तस्या अपि रथित्वेन रूपित आत्मा कर्तृत्वेन प्राधान्यात्परः। सर्वस्यात्मेच्छायत्तत्वात् आत्मैव महानिति विशेष्यते। तस्मादपि रथरूपितं शरीरं परम्। तदायत्तत्वा-ज्जीवस्य सकलपुरुषार्थप्रवृत्तीनाम्। तस्मादपि परः सर्वान्तरात्मभूतोऽन्तर्यामी

अध्वनः पारभूतः परमपुरुषः । यथोक्तस्यात्मपर्यन्तस्य तत्संकल्पायत्तप्रवृत्तित्वात् । स खल्वन्तर्यामितया उपासनस्यापि निर्वर्तकः । 'परात्तु तच्छ्रुते' रिति हि जीवात्मनः कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते । वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च स एव । तदिदमुच्यते 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गति' रिति । तथा अन्तर्यामिब्राह्मणे 'य आत्मनि तिष्ठ'न्नित्यादिभिः सर्वं साक्षात्कुर्वन् सर्वं नियमयतीत्युक्त्वा 'नान्योऽतोस्ति द्रष्टे' ति नियन्त्रन्तरं निषिध्यते । भगवद्गीतासु च 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चम' मिति । दैवमत्र पुरुषोत्तम एव । 'सर्वस्य चाहं हृदि सन्निविष्टो मत्तःस्मृतिज्ञानिमपोहनं चे' ति वचनात् । तस्य च वशीकरणं तच्छरणागतिरेव । यथाह 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ तमेव शरणं गच्छे' ति । तदेवं 'आत्मानं रथिनं विद्धी' त्यादिना रथ्यादिरूपकविन्यस्ता इन्द्रियादयः इन्द्रियेभ्यः परा ह्यर्था इत्यत्र स्वशब्दैरेव प्रत्यभिज्ञायन्ते, न रथरूपितं शरीरमिति परिशेषात्तदव्यक्तशब्देनोच्यते 'इति ॥ १०+११ ॥

**एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते । दृश्यते त्वग्र्यया**
**बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥**

**एष सर्वेषु भूतेष्विति** । सर्वेषु भूतेषु आत्मतया वर्तमानोसौ गुणत्रयमायातिरोहितत्वेन अजितबाह्यान्तःकरणानां न यथावत्प्रकाशते । **अग्र्यया**—ऐकाग्र्ययुक्तया बाह्याभ्यन्तरव्यापाररहितया **सूक्ष्मया**—सूक्ष्मार्थविवेचनशक्तया सूक्ष्मदर्शनशीलैर्दृश्यत इत्यर्थः ॥ १२ ॥

**यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेद् ज्ञान आत्मनि । ज्ञान-**
**मात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥ १३ ॥**

बाह्याभ्यन्तरकरणव्यापारराहित्यप्रकारं 'अध्यात्मयोगाधिगमे' नेति निर्दिष्टजीवस्वरूपज्ञानप्रकारञ्च दर्शयति—**यच्छेद्वाङ्मनसीत्यादिना** । इम मन्त्रं प्रस्तुत्येत्थं हि(?) भाष्यकृता 'हयादिरूपितानामिन्द्रियादीमां वशीकरणप्रकारोयमुच्यते । **यच्छेद्वाङ्मनसी**—वाचं मनसि नियच्छेत् । वाक्पूर्वकाणि कर्मेन्द्रियाणि ज्ञानेद्रियाणि च मनसि नियच्छेदित्यर्थः । वाक्छब्दे द्वितीयायाः 'सुपां सुलुगि' त्यादिना लुक् ।

मनसी इति सप्तम्याश्छान्दसो दीर्घः । **तद्यच्छेत् ज्ञान आत्मनि**—तत् मनः बुद्धौ नियच्छेत् । ज्ञानशब्देनात्र पूर्वोक्ता बुद्धिरभिधीयते । ज्ञान आत्मनीति व्यधिकरणे सप्तम्यौ । आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थः । **ज्ञानमात्मनि महति नियच्छेत्**—बुद्धिं कर्तरि महति आत्मनि नियच्छेत् । **तद्यच्छेच्छान्त आत्मनि**—तं कर्तारं परस्मिन् ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत् । व्यत्ययेन तदिति नपुंसकलिङ्गता । एवंभूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थः ' इति भाषितम् । विवृतञ्च श्रुतप्रकाशिकायाम्—'वाचो मनसि नियमनं मनोननुगुणप्रवृत्तिवैमुख्यापादनम् । मनसः बुद्धौ नियमनं व्यवसायानुगुणप्रवृत्तितापादनम् । बुद्धिश्चार्थेषु हेयत्वाध्यवसायरूपा । तस्याः बुद्धेरात्मनि नियमनं नाम स एवोपादेयतया साक्षात्कार्य इत्येतदर्थविषयत्वापादनम् । शान्ते स्वत ऊर्मिषट्कप्रतिभटे । शान्त आत्मनि महत आत्मनो जीवस्य नियमनं नाम तच्छेषताप्रतिपत्ति ' रिति । 'आत्मशब्दस्य पुल्लिङ्गत्वात् पुल्लिङ्गतच्छब्देन दिर्देष्टव्ये छान्दसत्वाल्लिङ्गव्यत्ययः' इति । ननु भाष्ये ज्ञान आत्मनीति व्यधिकरणे सप्तम्यौ, आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थः' इत्युक्तिरयुक्ता ; अव्यावर्तकत्वादात्मनीति विशेषणस्य । आत्मन्यवर्तमानज्ञानस्यैवाभावात् । न च 'तद्यच्छेत् ज्ञान 'इत्येतावत्युक्ते आत्मस्वरूपज्ञानभ्रान्तिस्स्यात् । अतः ज्ञान आत्मनीत्युक्तमिति वक्तुं शक्यम् । तथा सति तस्या एव भ्रान्तेः सामानाधिकरण्ययोजनया दृढीकरणप्रसङ्गात् । नह्यात्मनीत्यनेन आत्मभ्रान्तिर्व्युदस्यते । न च आत्मनि वर्तमान इति भाष्यस्य आत्मनि विषयविषयिभावलक्षणसम्बन्धेन वर्तमान इत्यर्थः । आत्मविषयज्ञान इति यावत् । अतो व्यावर्तकतया न वैयर्थ्यदोष इति वाच्यम् । तथासति 'ज्ञानमात्मनि महति नियच्छे'दित्यस्य वैयर्थ्यापातात् । तदर्थस्य अनेनैव सिद्धे रिति चेत्—उच्यते । अयमभिप्रायो भाष्यकारस्य—तद्यच्छेत् ज्ञान आत्मनीत्यत्र आत्मनीति विषयसप्तमी । तच्चात्मविषयकज्ञानं, 'आत्मा उपादेयः तदतिरिक्ता अर्था हेया' इत्येवंरूपम् । तच्चार्थेषु हेयताध्यवसायरूपा बुद्धिरिति श्रुतप्रकाशिकायां व्यक्तम् । अस्य चात्मानात्मविषयकाहेयहेयताध्यवसायरूपस्य ज्ञानस्य महत्यात्मनि नियमनं नाम स एवोपादेयतया साक्षात्कार्य इत्येतदर्थविषयत्वापादनमिति तत्रैव श्रुतप्रकाशिकायामुक्तत्वात् वाक्यद्वयस्यापि सप्रयोजनतया त्वदुक्तवैयर्थ्यशङ्कानवकाश इति ॥ १३ ॥

**उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत । क्षुरस्य धारा निशिता**
**दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ॥ १४ ॥**

एवं वशीकरणप्रकारमुपदिश्य अधिकारिपुरुषानभिमुखीकरोति — **उत्तिष्ठत जाग्रतेति** । आत्मज्ञानाभिमुखा भवत । अज्ञाननिद्रायाः क्षमं कुरुत । **वरान्**— श्रेष्ठान् आचार्यानुपसंगम्यात्मतत्त्वं निबोधत । यद्वा उपासिताद्भगवतो वा ब्रह्मविद्भ्यो वा 'देवतापारमार्थ्यं च यथावद्वेत्स्यते भवानि' त्येवंरूपान् वरान् प्राप्य ज्ञेयमात्मतत्त्वं निबोधत । नोदासितव्यमिति भावः । **क्षुरस्येति** । ज्ञानिनः तत् आत्मतत्त्वं दुर्गमं पंथानं वर्णयन्ति । तत् कस्य हेतोः, यत आमतत्त्वं, **क्षुरस्य**—आयुधविशेषस्य **धारा**—अग्रम्, **निशिता**—तीक्ष्णा, **दुरत्यया**—अनतिक्रमणीया । तीक्ष्णक्षुराग्रे सञ्चरतः पुंसो यथा कियत्यप्यनवधाने आत्मनाशो भवति, एवमिहात्मस्वरूपावगतिदशायां स्वल्पेप्यनवधानापराधे आत्मनाशो भवतीति भावः ॥ १४ ॥

**अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।**
**अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्र-**
**मुच्यते ॥ १५ ॥**

उपसंहरति—**अशब्दमस्पर्शमिति** । अत्र नित्यमित्येतत् अशब्दमित्यादौ प्रत्येकमभिसंबध्यते । अशब्दत्वादिवशादेव कालवदव्ययम् । अवयवापचयशून्यमित्यर्थः । महत इत्यनेन 'आत्मनि महति नियच्छे'दिति पूर्वमन्त्रनिर्दिष्टो जीवो गृह्यते । **ध्रुवं**—स्थिरम् । **निचाय्य**—दृष्ट्वा दर्शनसमानाकारोपासनेन विषयीकृत्येत्यर्थः । **मृत्युमुखादिति** । भीषणात्संसारादित्यर्थः ॥ १५ ॥

**नाचिकेतमुपाख्यानं मृत्युप्रोक्तꣳसनातनम् । उक्त्वा श्रुत्वा**
**च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥**

उपसंहरति—**नाचिकेतमिति** । नचिकेतसा प्राप्तं नाचिकेतम् । **मृत्युप्रोक्तं**— मृत्योः प्रवक्तृत्वमेव, न स्वतन्त्रवक्तृत्वम् । अतस्सनातनम् । अपौरुषेयत्वात् प्रवाहरूपेण नित्यमित्यर्थः ॥ १६ ॥

य इदं परमं गुह्यं श्रावयेत् ब्रह्मसंसदि । प्रयतःश्राद्धकाले वा तदानन्त्याय कल्पते ॥ तदानन्त्याय कल्पत इति ॥१७॥

॥ इति तृतीया वल्ली ॥
॥ इति प्रथमोध्यायः ॥

**य इदमिति । ब्रह्मसंसदि**—ब्राह्मणसमाजे ॥ १७ ॥

॥ इति तृतीयवल्लीभाष्यं समाप्तम् ॥

॥ इति कठोपनिषदि प्रथमाध्यायभाष्यम् ॥



## ॥ अथ द्वितीयोध्यायः चतुर्थवल्ली ॥

**हरिः ओं ॥ पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यन्ति- नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्त- चक्षुरमृतत्वमिच्छन् ॥ १ ॥**

'उत्तिष्ठत जाग्रते' ति प्रोत्साहनेपि आत्मस्वरूपविमुखान् पश्यन् शोचति—**पराञ्चीति । खानि** इन्द्रियाणि । **पराञ्चि**—परानञ्चतीति पराञ्चि, परप्रकाशकानि, न स्वात्मप्रकाशकानि । तत्र हेतुं वदन् शोचति—**व्यतृणत्स्वयंभूः**—स्वतन्त्र ईश्वरः इमानि स्वानि हिंसितवान् । 'तृह् हिंसाया' मिति धातुः । यद्वा—धातूनामनेकार्थत्वात् परोर्थप्रकाशकानि इन्द्रियाणि सृष्टवानित्यर्थः । **तस्मात्पराङ्पश्यन्ति नान्तरात्मन्**—पराङ्-पराच इति यावत् । पराग्रूपानात्मभूतान् पश्यन्ति उपलभन्ते अन्तरात्मानं नेत्यर्थः । यद्वा—पराङ्मुखानि भूत्वा विषयानेव पश्यन्तीत्यर्थः । पराङ् पश्यतीति पाठे लोकाभिप्रायमेकवचनम् । ईदृशेऽपि लोकस्वभावे नद्याः प्रतिस्रोतःप्रवृत्त इव कश्चित् पुरुषधौरेयः प्रत्यगात्मप्रवणोप्यस्तीत्याह—**कश्चिद्धीर** इति । प्रत्यञ्चमात्मानं पश्यतीत्यर्थः । छान्दसं परस्मैपदम् । अत एव वर्तमानार्थे लङुपपत्तिश्च । चक्षुश्शब्द इन्द्रियमात्रपरः । स्वस्वविषयव्यावृत्तेन्द्रियो मुमुक्षुरित्यर्थः ॥ १ ॥

**पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् । अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥**

**पराच** इति—बालाः अल्पप्रज्ञाः, बाह्यान् काम्यमानान्विषयानेवावगच्छन्ति । ते विस्तीर्णस्य संसारस्य बन्धनं यान्तीत्यर्थः । यद्वा विततस्य सर्वत्राप्रतिहताज्ञस्य मृत्योर्मम पाशं यान्तीत्यर्थः । **अथ धीरा इति** । अथशब्दः प्रकृतविषयार्थान्तरपरिग्रहे । धीमन्तः प्रत्यगात्मन्येव ध्रुवममृतत्वं विदित्वा इह संसारमण्डले अध्रुवेषु पदार्थेषु कमपि न प्रार्थयन्ते । प्रत्यक्तत्त्वज्ञस्य सर्वं जिहासितव्यमिति भावः । परमात्मनस्सर्वजीवगताहन्तास्पदत्वेन मुख्याहमर्थत्वात् प्रत्यक्त्वमस्तीति द्रष्टव्यम् ॥ २ ॥

**येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् । एतेनैव विजानाति किमत्र परिशिष्यते ॥ एतद्वै तत् ॥ ३ ॥**

**येनेति** । मैथुनान् मिथुननिमित्तकसुखविशेषानित्यर्थः । निश्शेषं येन एतेनैव साधनेन जानातीत्यर्थः । 'तं देवा ज्योतिषां ज्योति' रिति रूपादिप्रकाशकानामिन्द्रियाणां तदनुगृहीतानामेव कार्यारम्भकत्वादिति भावः । **किमत्र परिशिष्यते**—किं तदप्रकाश्यमिति भावः । **एतद्वै तत्**—पूर्वं प्राप्यतया निर्दिष्टं तत्परमं पदं एतद्वै—एतदेव एतन्मन्त्रप्रतिपाद्यात्मस्वरूपमेवेत्यर्थः ॥ ३ ॥

**स्वप्नान्तं जागरितान्तञ्चोभौ येनानुपश्यति । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥**

**स्वप्नान्तमिति** । सकलं स्वप्नप्रपञ्चं जाग्रत्प्रपञ्चं च मन आदीन्द्रियभावमापन्नेन **येन** परमात्मना लोकः पश्यतीत्यर्थः । महान्तमित्यत्र तमिति शेषः । उक्तोऽर्थः ॥ ४ ॥

**य इदं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥ एतद्वै तत् ॥ ५ ॥**

**य इदं मध्वदमिति** । इदमिति लिङ्गव्यत्ययश्छान्दसः । इमं **मध्वदं**—'ऋतं पिबन्ता' विति निर्दिष्टं कर्मफलभोक्तारं जीवात्मानं 'गुहां प्रविष्टा' वित्युक्तरीत्या तस्यान्तिके कालत्रयवर्तिचिदचिदीश्वरं च यो वेद तं दुष्कृतकारिणमपि

न निन्देदित्यर्थः । 'गुप्तिजिकद्भ्यस्सन्' त्यत्र जुगुप्साशब्दः निन्दार्थक उक्तः । 'जुगुप्साविरामप्रमादार्थाना' मिति पञ्चमी । एतद्वै तदिति पूर्ववत् ॥ ५ ॥

**यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत । गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत ॥ एतद्वै तत् ॥ ६ ॥**

**यः पूर्वं तपसो जातमिति ।**

"अप एव ससर्जादौ तासु वीर्यमपासृजत् ।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥"

इति स्मृत्युक्तरीत्या अद्भ्यः अपादानेभ्यः व्यष्टिसृष्टेः पूर्वं यः अजायत, तं, **तपसः**— सङ्कल्पमात्रादेव पूर्वं जातं 'यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमान 'मिति श्रुत्युक्तरीत्या प्रथमं जातं **गुहां प्रविश्य तिष्ठन्तं**— हृदयगुहां प्रविश्य वर्तमानं, **भूतेभिः**—भूतैः देहेन्द्रियान्तःकरणादिभिरुपेतं चतुर्मुखं अयं सकलजगत्स्रष्टा स्यादिति कटाक्षेणैक्षतेत्यर्थः । **एतद्वै तत्**—उक्तोर्थः ॥

**या प्राणेन संभवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत ॥ एतद्वै तत् ॥ ७ ॥**

**या प्राणेनेति** । अयं च मन्त्रः 'गुहां प्रविष्टा'विति सूत्रे भगवता भाष्यकृता व्याख्यातः । इत्थं (तत्र?) हि भाष्यकृता 'कर्मफलान्यत्तीति अदितिः जीव उच्यते । **प्राणेन संभवति**—प्राणेन सह वर्तते । **देवतामयी**—इन्द्रियाधीनभोगा । **गुहां प्रविश्य तिष्ठन्ती**—हृदयपुण्डरीककुहरवर्तिनी । **भूतेभिर्व्यजायत**—पृथिव्यादिभिर्भूतैः सहिता देवादिरूपेण विविधाजायते 'इति भाषितम् । **एतद्वै तत्**— तत् तदात्मकमित्यर्थः । अत्रैव प्रकरणे 'ब्रह्मजज्ञं देवमीड्यं विदित्वे'त्यत्र देवमित्यस्य परमात्मात्मकमिति व्याख्यातत्वात् 'क्षेत्रज्ञं चापि मां विद्धी 'ति एतदुपबृंहणगीतावचनेऽपि मां मदात्मकमिति भाष्यकृतैव व्याख्यातत्वात् अपृथक्सिद्धविशेषणवाचिशब्दस्य विशेष्य इवापृथक्सिद्धविशेष्यवाचिशब्दस्यापि विशेषणे निरूढत्वात् तत्तदात्मकमित्यर्थो युक्त इति द्रष्टव्यम् ॥ ७ ॥

**अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः ।**
**दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ।। एतद्वै तत् ।।८।।**

**अरण्योर्निहितो जातवेदा** इति । **अरण्योः** अधरोत्तरारण्योः स्थितोऽग्निः गर्भिणीभिः पानभोजनादिना सुभृतो गर्भ इव निहित इति पूर्वेणान्वयः । **दिवेदिवे**—अहन्यहनि, **जागृवद्भिः**—जागरणशीलैः अप्रमत्तैः, **हविष्मद्भिः**—आज्यादि-हविःप्रदानप्रवृत्तैः ऋत्विग्भिः स्तुत्यः, अग्निः अग्रनेता अरण्योर्निहित इति योजना । एतद्वै तत्—**एतत्** अग्निस्वरूपं **तत्**—पूर्वोक्तब्रह्मात्मकमित्यर्थः ।। ८ ।।

**यतश्चोदेति सूर्यो अस्तं यत्र च गच्छति । तं देवास्सर्वेऽ**
**र्पितास्तदु नात्येति कश्चन ।। एतद्वै तत् ।। ९ ।।**

**यतश्चोदेतीति** । यस्मात् ब्रह्मणस्सकाशात् सूर्य उदेति **यत्र च** लयमेति, **तं देवास्सर्वे अर्पिताः**—देवास्सर्वे तस्मिन्नात्मनि प्रतिष्ठिता इत्यर्थः । **तदु नात्येति कश्चन**—इत्यवधारणे । तत् सर्वात्मकं ब्रह्म कोऽपि नातिक्रमते(?) । छायावदन्तर्यामिणो दुर्लंघत्वादिति भावः । **एतद्वै तत्**—उक्तोर्थः ।। ९ ।।

**यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योस्स मृत्युमाप्नोति**
**य इह नानेव पश्यति ।। १० ।।**

ननु परमात्मनः सर्वात्मत्वं न संभवति । अहमित्यहन्ताश्रयत्वेनानुसन्धीयमानो ह्यात्मा । स चाहमिहैवास्मीति देशान्तरव्यावृत्ततयाऽनुसन्धीयते । तस्य सर्वदेशकालवर्तिसर्वपदार्थात्मभूतत्वं कथमित्याशङ्क्याह—**यदेवेह तदमुत्र यदमुत्र तदन्विह**—यदेव परमात्मतत्त्वं **इह** अत्र लोके अहमित्यनुसन्धीयमानतया आत्मभूतं, तदेव लोकान्तरस्थानामपि आत्मभूतमित्यर्थः । ततश्च आत्मभेदो नास्तीत्यर्थः । अयमभिप्रायः । किं परमात्मतत्त्वविदामहमिहैवेति प्रतीतिस्सर्वदेशकालवर्तिपदार्थात्मत्वबाधकतयोपन्यस्यते । उत तद्रहितानाम् । नाद्यः । तेषामहमिहैवेत्यादिप्रतीतेरेवाभावात् । प्रत्युत 'अहं मनुरभवं सूर्यश्चे' ति सर्ववस्तुवर्तितयैवानुभवात् । न द्वितीयः । अतत्त्वविदामहंप्रतीतेर्जीवमात्रविषयत्वेन तत्र देशान्तरव्यावृत्तत्वप्रतीतेः तदानीमप्रतीतपरमात्मनि सर्वदेशवर्तिपदार्थात्मत्वविरोधित्वाभावादिति । **मृत्योस्स**

**मृत्युमाप्नोति य इह नानेव पश्यति**—इह परमात्मनि भेदमिव यः पश्यति स तु संसारात्संसारं प्राप्नोतीत्यर्थः ॥ १० ॥

**मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन । मृत्योस्स मृत्युं गच्छति य इह नानेव पश्यति ॥ ११ ॥**

नन्वस्माकं सर्वात्मभूतं परमात्मतत्त्वं कुतो लभ्यत इत्यत्राह—**मनसैवेदमाप्तव्य**मिति । इदं आत्मस्वरूपं विशुद्धमनोग्राह्यमित्यर्थः । उक्तमेवार्थं दृढीकरणायाभ्यस्यति—**नेह नानास्तीत्यादि** । स्पष्टोऽर्थः ॥ ११ ॥

**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥ एतद्वै तत् ॥ १२ ॥**

**अङ्गुष्ठमात्र इति । ईशानो भूतभव्यस्य**—कालत्रयवर्तिनिखिलचेतनाचेतनेश्वरः पुरुषः, **मध्य आत्मनि**—उपासकशरीरमध्ये, अङ्गुष्ठपरिमाणस्सन्नास्ते । **न ततो विजुगुप्सते**—ततः भूतभव्येश्वरत्वादेव वात्सल्यातिशयाद्देहगतानपि दोषान् भोग्यतया पश्यतीत्यर्थः । 'ननु प्राणाधिपस्संचरति स्वकर्मभिरङ्गुष्ठमात्रो रवितुल्यरूपः' 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इत्यादिश्रुतिस्मृतिषु अङ्गुष्ठमात्रत्वेन प्रतिपादितस्य जीवस्यैवास्मिन्मन्त्रे प्रतिपादनं किं न स्यात् । न च न तस्य भूतभव्येशानत्वादीति वाच्यम् । प्रथमश्रुतजीवलिङ्गानुरोधेन चरमश्रुतभूतभव्येशानत्वस्य आपेक्षिकतया योजयितुं शक्यत्वादिति चेन्न । 'शब्दादेव प्रमितः' इत्यधिकरणे एवमेव पूर्वपक्षं कृत्वा 'हृदयावच्छेदनिबन्धनाङ्गुष्ठपरिमाणस्य परमात्मन्यपि संभवात् 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः' इति तैत्तिरीयके 'अङ्गुष्ठमात्रः पुरुषोन्तरात्मा सदा जनानां हृदये सन्निविष्टः' इति श्वेताश्वतरे चाङ्गुष्ठमात्रत्वस्य परमात्मन्यपि श्रवणात् असङ्कुचितभूतभव्येशितृत्वस्य अनन्यथासिद्धब्रह्मलिङ्गत्वादयं मन्त्रः परमात्मपर एवे' ति सिद्धान्तितत्वात् । यत्त्वत्र कैश्चिदुच्यते—अङ्गुष्ठमात्रत्वं जीवलिङ्गमेव । अथापि 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठती' ति पूर्वार्धेन जीवमनूद्य ईशानो भूतभव्यस्येत्यनेन परमात्मभावो विधीयत—इति । तदसमञ्जसम् । तथाहि सति परमात्मन्यङ्गुष्ठमात्रत्वसंभावनाप्रदर्शकस्य 'हृद्यपेक्षया तु मनुष्याधिकारत्वा' दिति सूत्रस्यासङ्गतिप्रसङ्गात् । ननु नास्मिन्मन्त्रे जीवानुवादेन ब्रह्मभावो विधीयते,

आराग्रमात्रतया प्रतिपन्नस्य जीवस्य अङ्गुष्ठमात्रत्वे प्रमाणाभावादिति तटस्थशङ्कापरिहारार्थं जीवस्याङ्गुष्ठमात्रत्वसाधनाय प्रवृत्तमिदं सूत्रमिति चेत्—तथाश्रयणस्य क्लिष्टत्वात् । ननु 'ईश्वरश्शर्व ईशान' इति निघण्टुपाठेन ईशानशब्दस्य देवताविशेषे रूढत्वात्, 'शब्दादेव प्रमित' इति सूत्रे 'ईशानो भूतभव्यस्ये'ति शब्दादेव । न च भूतभव्यस्य सर्वस्येशितृत्वं कर्मवश्यस्य जीवस्योपपद्यत, इति भाष्यं व्याकुर्वद्भिर्व्यासार्यैः 'ईशानशब्दस्यैव शब्दशब्देन विवक्षितत्वात्' 'नात्र लिङ्गान्निर्णयः । किन्त्वीश्वरवाचिशब्दादेवेत्येवकाराभिप्राय' इति व्याख्यातत्वात् ईशानशब्दस्य श्रुतित्वाभ्युपगमात् तयैव चेशानशब्दश्रुत्या जीवव्यावृत्तिवदेव नारायणस्यापि व्यावर्तितत्वेन रुद्रपरत्वमेव स्यादिति चेन्न । योगरूढिमतः पदस्य सन्निधाववयवार्थविशेषकपदान्तरसन्निधाने रूढ्यनुन्मेषस्य 'पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखै' रित्यादिषु दर्शनात् । तत्र हि सरोरुहपदावयवार्थसरोविशेषकाग्रपदोपादानेन सरोरुहपदरूढिभङ्गस्य दर्शनात् । इतरथा पद्मानीति पदानुपादानापत्तेः । अत ईशानशब्दस्य न श्रुतित्वम् । एतदस्वरसादेव व्यासार्यैरपि यथाश्रुतभाष्यानुगुण्येन यद्वेति पक्षान्तरस्य आश्रितत्वादित्यलमति चर्चया । प्रकृतमनुसरामः । **एतद्वै तत्**—उक्तोऽर्थः ॥ १२ ॥

**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ॥ एतद्वै तत् ॥ १३ ॥**

**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमक इति** । शुष्केन्धनानलवत् प्रकाशमान इत्यर्थः । **स एवाद्य स उ श्वः**—अद्यतनपदार्थजातं श्वस्तनपदार्थजातं कालत्रयवर्तिपदार्थजातमपि तदात्मकमित्यर्थः । **एतद्वै तत्**—पूर्ववत् ॥ १३ ॥

**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥ १४ ॥**

**यथोदकमिति** । पर्वतमूर्ध्नि वृष्टं प्रत्यन्तपर्वतेषु नानाभूततया पतित्वा पतित्वा धावति । एवं परमात्मगतदेवान्तर्यामित्वमनुष्यान्तर्यामित्वादिधर्मान् पृथगधिकरणनिष्ठान् पश्यन् पर्वतनिर्झरपातमनुकृत्य संसारकुहरे पततीत्यर्थः ॥ १४ ॥

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुने-
र्विजानत आत्मा भवति गौतम ॥ १५ ॥

॥ इति चतुर्थवल्ली समाप्ता ॥

सर्वत्रैकात्मत्वज्ञानस्य फलमाह—**यथोदकमिति** । यथा शुद्धजले शुद्धजलं योजितं तत्सदृशमेव भवति न कथञ्चिदपि विसदृशं एवं—इत्थं विजानतः मननशीलस्य आत्मापि परमात्मज्ञानेन विशुद्धस्सन् विशुद्धेन परमात्मना समानो भवतीत्यर्थः । गौतमेति प्राप्यवैभवं सूचयन् सहर्षं संबोधयति ॥ १५ ॥

॥ इति कठोपनिषदि चतुर्थवल्लीभाष्यम् ॥

॥ अथ पञ्चमवल्ली ॥

हरिः ओं ॥ पुरमेकादशद्वारमजस्यावक्रचेतसः । अनुष्ठाय न
शोचति विमुक्तश्च विमुच्यते ॥ एतद्वै तत् ॥ १ ॥

**पुरमिति** । जननादिविक्रियारहितस्य ऋजुबुद्धेर्विवेकिन आत्मनः एकादशेन्द्रियलक्षणबहिर्निर्गमद्वारोपेतं शरीराख्यं पुरं भवति । पुरस्वामिनः यथा पुरं विविक्तं भवति, तथा शरीरमपि स्वात्मनो विविच्य ज्ञातं भवति । अविवेकिनस्तु देह आत्मेव भवतीति भावः । **अनुष्ठाय न शोचति**—विविच्य जानन् देहानुबंधिभिः दुःखैः कामादिभिश्च विमुक्तो भवतीत्यर्थः । **विमुक्तश्च विमुच्यते**—जीवद्दशायामाध्यात्मिकादिदुःखरागद्वेषादिविमुक्त एव सन् 'भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते' इति न्यायेन प्रारब्धकर्मावसाने अर्चिरादिना विरजां प्राप्य प्रकृतिसम्बन्धविमुक्तो भवतीत्यर्थः । **एतद्वै तत्**—एतन्मन्त्रप्रतिपाद्यमुक्तस्वरूपमपि परमात्मात्मकमेवेत्यर्थः ॥ १ ॥

हꣳसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं
बृहत् ॥ २ ॥

पुनरप्यस्य सर्वात्मतामेव द्रढयति—**हँसश्शुचिषदिति**। **हंसः** सूर्यः शुचौ ग्रीष्मर्तौ सीदति वर्तत इति **शुचिषत्**—तेजस्वीति यावत्। वासयतीति **वसुः** वायुः **अन्तरिक्षसत्** अन्तरिक्षगतो वायुः। **होता वेदिषत्**—वेद्यन्तर्विद्यमान ऋत्विग्विशेषोऽग्निर्वा। **अतिथिर्दुरोणसत्**—दुरोणं–गृहं, गृहागतोऽथितिः। **नृषत्**—नृष्वात्मतया वर्तमानं, **वरसत्**—वरेषु देवेषु च तथा वर्तमानं, ऋते सत्यलोके सीदतीति **ऋतसत्**। **व्योमसत्**—व्योम्नि परमपदे वर्तमानं च प्रत्यक्तत्त्वम्; **अब्जाः**—जलजाः, **गोजाः**—भूजाः, **ऋतजाः**—यज्ञोत्पन्नाः कर्मफलभूताश्च स्वर्गादय इति यावत्। यद्वा चिरकालस्थायितया ऋतशब्दिताकाशजा इत्यर्थः। **अद्रिजाः**—पर्वतजाः, एतत्सर्वं **बृहत् ऋतम्**—अपरिच्छिन्नसत्यरूपब्रह्मात्मकमित्यर्थः ॥ २ ॥

**ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वे देवा उपासते ॥ ३ ॥**

**ऊर्ध्वं प्राणमिति**। सर्वेषां हृदयगतः परमात्मा प्राणवायुमूर्ध्वमुखमुन्नमयति। अपानवायुमधोमुखं क्षिपति। **मध्ये** हृदयपुण्डरीकमध्ये आसीनं **वामनम्**—वननीयं, भजनीयं, अथवा हृदयपुण्डरीकपरिमिततया ह्रस्वपरिमाणमित्यर्थः। तं **विश्वे देवाः**—सत्त्वप्रकृतयः सर्वेपि उपासत इत्यर्थः ॥ ३ ॥

**अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः ।**
**देहाद्विमुच्यमानस्य किमत्र परिशिष्यते ॥ एतद्वै तत् ॥ ४ ॥**

एवं परमात्मानमुपासीनस्य 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति श्रुत्युक्तरीत्या शरीरपात एवान्तरायः, न किंचित्कर्तव्यं परिशिष्यत इत्याह—**अस्य विस्रंसमानस्येति**। अस्य उपासकस्य **देहिनः**, **शरीरस्थस्य** शरीरप्रतिष्ठितस्य दृढशरीरस्येति यावत्। एवं भूतस्य वा, **विस्रंसमानस्य**—शिथिलीभवद्गात्रस्य वा **देहाद्विमुच्यमानस्य**—कृतकृत्यत्वात् कर्तव्यं किमपि नावशिष्यत इति भावः। **एतद्वै तत्**—पूर्ववत् ॥ ४ ॥

**न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।**
**इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥**

तस्य सर्वप्राणिप्राणनहेतुत्वरूपं महिमानमाह—न—**प्राणेनेति**। केनेतरेण जीवन्तीत्यत्राह—**यस्मिन्नेतावुपाश्रितौ**। यदधीनं प्राणापानयोरपि जीवनं तदधीनमेव सर्वेषां जीवनमिति भावः। स्पष्टमन्यत् ॥ ५ ॥

**हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्।**
**यथा च मरणं प्राप्य आत्मा भवति गौतम ॥ ६ ॥**

**हन्त त इदमिति। गुह्यं**—अतिरहस्यं सनातनं ब्रह्म ते पुनरपि प्रवक्ष्यामि। हन्तेति स्वगतम् आश्चर्ये। हे गौतम आत्मा मरणं मोक्षं प्राप्य यथा यत्प्रकारविशिष्टो भवति तथा पुनरपि मुमुक्षवे रागाद्यनुपहताय उपदेशयोग्याय तुभ्यं वक्ष्यामीत्यर्थः ॥ ६ ॥

**योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।**
**स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ ७ ॥**

अधिकारिविशेषनिर्देशपरेण "हन्त त" इत्यनेन सूचितमर्थं विवृणोति—**योनिमिति**। अन्ये परमात्मतत्त्वश्रवणविमुखाः त्वद्विसदृशाः शरीरपरिग्रहाय ब्राह्मणादियोनिं प्रपद्यन्ते। अन्ये स्थावरभावमनुगच्छन्ति। स्वानुष्ठितयज्ञादिकर्मोपासनानतिक्रमेण "रमणीयचरणाः" "तं विद्याकर्मणी समन्वारभेते" इत्यादिश्रुत्यनुरोधादिति भावः ॥ ७ ॥

**य एष सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः।**
**तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥**
**तस्मिन् लोकाः श्रितास्सर्वे तदु नात्येति कश्चन।**
**एतद्वै तत् ॥ ८ ॥**

एवं शिष्यं प्ररोचनयाभिमुखीकृत्य प्रकृतमनुसरति—**य एष सुप्तेषु जागर्तीति**। सर्वेषु सुप्तेषु जीवेषु **कामंकामं** णमुलन्तमिदम्। सङ्कल्प्य सङ्कल्प्येत्यर्थः। न तु "सर्वान् कामान् छन्दतः प्रार्थयस्वे"ति प्रकृताः पुत्रादयः कामशब्देन निर्दिश्यन्ते। अयं चार्थः सन्ध्याधिकरणभाष्यश्रुतप्रकाशिकयोः स्पष्टः। सङ्कल्प्य स्वच्छन्दानुरोधेन निर्मिमाणः पुरुषो योऽस्ति तदेव **शुक्रं**—प्रकाशकं **तदेवानन्याधीन**-

ममृतमुच्यत इत्यर्थः । शिष्टं स्पष्टम् । नित्यमुक्तानाममृतत्वसत्वेपि निरुपाधिकामृतत्वाभावात् तदेवामृतमित्यवधारणस्य नानुपपत्तिरिति द्रष्टव्यम् । एतेनामृतान्तरनिषेधात् मुक्तपरमात्मनोरभेदमत्याशा प्रत्युक्ता । अतत्यामृतशब्दस्य निरुपाधिकामृतवाचित्वात् ॥ ८ ॥

**अग्निर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव ।**
**एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च ॥ ९ ॥**

एक एवात्मा सर्वेषामहमर्थतया आस्ते इत्यस्यार्थस्य दुर्बोधत्वात् तद्दृढीकरणाय पुनरप्युपदिशति **अग्निर्यथैक** इति । यथा एकस्तेजोधातुः त्रिवृत्करणकृतव्याप्त्या अण्डान्तर्गतलोके प्रविष्टस्सन्—**रूपंरूपं**—रूपेरूपे भौतिकव्यक्तिषु, वीप्सायां द्विर्वचनम् । प्रतिरूपः प्रत्युतं रूपं यस्य स तथोक्तः । सर्वासु भौतिकव्यक्तिषु तेजोधातोर्मिलितत्वेन प्रतिसङ्क्रान्तरूपत्वात् प्रतिरूपत्वमस्तीति द्रष्टव्यम् । तथा एक एव सन् परमात्मा प्रतिवस्तु प्रतिसङ्क्रान्तान्तर्यामिविग्रहो बहिश्च व्याप्नोतीत्यर्थः ॥ ९ ॥

**वायुर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव । एक-**
**स्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च ॥ १० ॥**

उदाहरणान्तरमाह— **वायुर्यथे**ति । पूर्ववत् ॥ १० ॥

**सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।**
**एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥ ११ ॥**

आत्मत्वाविशेषेपि जीवात्मवत् दोषाः परमात्मनि न भवन्तीत्येतत्सदृष्टान्तमाह— **सूर्यो यथे**ति । 'रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः,' 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इति श्रुत्यनुसारेण यथा सूर्यश्चक्षुरधिष्ठातृतया तदन्तर्गतोपि बहिर्निर्गतैश्चक्षुर्मालिन्यादिभिर्न स्पृश्यते तथा परमात्मा सर्वभूतेष्वात्मतया वर्तमानोपि तद्गतैर्दोषैर्न स्पृश्यते । तस्य स्वाभाविकापहतपाप्मत्वादिगुणयुक्ततया स्वेतरसमस्तबाह्यत्वात् विलक्षणत्वादित्यर्थः ॥ ११ ॥

**एको वशी सर्वभूतान्तरात्मा एकं बीजं बहुधा यः करोति ।**
**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥**

**एकोवशीति** । एकः समाभ्यधिकरहितः । वशः इच्छा सोऽस्यास्तीति वशी । 'जगद्वशे वर्तत' इत्युक्तरीत्या वशवर्तिप्रपञ्चक इति वाऽर्थः । एकं बीजं 'तमःपरे देव एकीभवती' ति श्रुत्युक्तरीत्या स्वेन एकीभूताविभागावस्थं तमोलक्षणं बीजं महदादिबहुविधप्रपञ्चरूपेण यः करोति तं य आत्मनि तिष्ठन्नित्युक्तरीत्या स्वान्तर्यामिणं ये पश्यन्ति तेषामेव मुक्तिरित्यर्थः ॥ १२ ॥

**नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति**
**कामान् । तमात्मस्थं येऽनु पश्यन्ति धीरास्तेषां शान्तिः**
**शाश्वती नेतरेषाम् ॥ १३ ॥**

**नित्यो नित्यानामिति** । नित्यश्चेतन एक एव सन् बहूनां नित्यानां चेतनानामपेक्षितार्थान् अनायासेन प्रयच्छति । शिष्टं स्पष्टम् ॥ १३ ॥

**तदेतदिति मन्यन्ते निर्देश्यं परमं सुखम् । कथन्नु तद्विजा-**
**नीयां किमु भाति विभाति वा ॥ १४ ॥**

एवमुक्तश्शिष्य आह---**तदेतदितीति** । **तत्**---अलौकिकं परमात्मानमानन्दरूपं ब्रह्म **एतदिति**---करतलामलकवत् अपरोक्षं भवादृशाः निष्पन्नयोगा मन्यन्ते । भवादृशास्साक्षात्कर्तुं शक्नुवन्तीत्यर्थः । कथं रूपादिहीनं ब्रह्म ग्रहणासमर्थमानसोऽहं विजानीयाम् । तत् किं दीप्तिमत्तया भासते । तत्रापि विस्पष्टं प्रकाशते । उत तेजोन्तरसंवलनान्न विस्पष्टं प्रकाशते इति प्रश्नः ॥ १४ ॥

**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति**
**कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा**
**सर्वमिदं विभाति ॥ १५ ॥**

॥ इति पञ्चमवल्ली ॥

---

परमात्मनः योगयुगालम्बनाय 'आदित्यवर्णं तमसः परस्तात्' 'सदैकरूपरूपाये' ति प्रमाणप्रतिपन्नशुभाश्रयदिव्यमङ्गलविग्रहोऽस्ति, तद्विशिष्टः परमात्मा विभाति सर्वातिशायिदीप्तिमानित्याह--- **न तत्र सूर्यो भातीति** । अयं च मन्त्रः

'ज्योतिर्दर्शना' दिति सूत्रे 'सर्वतेजसां छादकं सर्वतेजसां कारणभूतमनुग्राहकं च अङ्गुष्ठप्रमितस्य ज्योतिर्दृश्यत' इति भाष्येण विवृतः । इदं च भाष्यं– 'न तत्र सूर्य इत्यादिमन्त्रे पूर्वार्धस्यार्थमाह—सर्वतेजसां छादकमिति । उत्तरार्धस्य पूर्वपादार्थमाह—सर्वतेजसां कारणभूतमिति । अनुभानं पश्चाद्भानम् । तेन कार्यकारणभावः सिद्धः । पौर्वापर्यनियमो हि कार्यकारणभाव इति भावः । चतुर्थपादार्थमाह— अनुग्राहकमिति । 'यस्यादित्यो भामुपयुज्य भाती' त्यादिश्रुतिश्चानुग्राहकत्वे प्रमाण–' मिति व्यासार्यैर्विवृतम् । तदीयदीप्तिसाक्षात्कारसंभवे तेजोन्तराणामभिभूतत्वं प्रथमार्धार्थः । तेजोन्तरोत्पत्तौ तदुपादानद्रव्यानुग्राहकत्वरूपं निमित्तत्वं तृतीयपादार्थः चाक्षुषरश्म्यनुग्राहकचन्द्रातपादेरिव उत्पन्नस्यापि तेजसः स्वसंबंधेन स्वकार्यकरणसामर्थ्याधायकत्वलक्षणानुग्राहकत्वं चतुर्थपादार्थ इत्यप्यर्थस्तत्रैव द्रष्टव्यः । अधिष्ठानब्रह्मरूपभानव्यतिरिक्तभानशून्यत्वमध्यस्तप्रपञ्चस्य तृतीयपादार्थ इति यत्परैरुच्यते तदयुक्तम् । तथाहि सति भान्तमिति कर्त्रर्थशतृप्रत्ययस्य 'शिष्यज्ञानं प्रकाशत' इतिवदभेदेपि कथञ्चित्संभवेपि अनुभातीत्यस्य शब्दस्यायोगात् । न हि देवदत्तगमनक्रियाव्यतिरिक्तगमनक्रियाशून्ये तिष्ठति यज्ञदत्ते, गच्छन्तं देवदत्तं यज्ञदत्तोऽनुगच्छतीति प्रयोगो दृष्टचरः । ननु वह्निमेव दहन्तमयोऽनुदहतीति प्रयोगो दृष्टचर इति चेत्–न । अयसः पृथक् दग्धृत्वाभावं निश्चितवतः तत्प्रतिपिपादयिषया तादृशप्रयोगस्य सम्प्रतिपन्नत्वाभावात् । ननु तदीयदीप्तिसाक्षात्कारसंभवे तेजोन्तराणामभिभूतत्वमिति भवदभिमतार्थोपि न युज्यते, तदीयदीप्तिसाक्षात्कारवतामपि मुक्तानां तेजोन्तरसाक्षात्कारदर्शनेन सजातीयसंवलनाधीनाग्रहणलक्षणाभिभवस्याभावादिति चेदुच्यते । बद्धविषयमेवैतत् । बद्धानां तत्साक्षात्काराप्रसक्तेरिदं कथमिति चेन्न । बद्धानामेवार्जुनादीनां तत्साक्षात्कारदर्शनात् । यद्वा कालिदासकवौ परिगण्यमाने इतरः कुकविरकविरितिवत् भाति ब्रह्मणि परिगण्यमाने सूर्यादितेजोन्तरं न भाति । अतस्तदेव ब्रह्म अतिभास्वररूपशालीति पूर्वार्धार्थः । 'तदीयदीप्तिसाक्षात्कारसंभवे तेजोन्तराणामभिभूतत्व' मिति व्यासार्यवचनस्याप्ययमेवार्थः । इममेवार्थं इतरतेजसां स्वरूपोत्पत्तौ फलजनने च परमात्मानुग्रहसापेक्षत्वप्रदर्शकेन तमेव भान्तमित्युत्तरार्धेन द्रढयतीति न दोष इत्यवगन्तव्यम् । यद्वा पूर्वार्धस्य यथाश्रुत एवार्थः । नन्वतिभास्वररूपवति सूर्यादौ प्रत्यक्षेणानुभूयमाने न भातीति प्रत्यक्षविरुद्धं कथमभि-

धीयत इत्यत्राह—तमेव भान्तमनुभातीति । इदं च परिदृश्यमानं भास्वररूपं न स्वाभाविकं, अपितु परमात्मदत्तं तदीयमेव तेजः । गीतं च भगवता 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक' मिति । विवृतं चैतद्भगवता भाष्यकृता— 'अखिलस्य जगतो भासकमेतेषामादित्यादीनां यत्तेजः तन्मदीयं तेजः । तैस्तैराराधितेन मया तेभ्यो दत्तमिति विद्धि' इति । अतः अन्धकारे खद्योततुल्यानामेतेषां भास्वररूपशालिनां न भातीति व्यपदेशो युज्यत इति भावः ॥ १५ ॥

॥ इति कठोपनिषादि पञ्चमवल्लीभाष्यम् ॥

॥ अथ षष्ठवल्ली ॥

**हरिः ओं ॥ ऊर्ध्वमूलो अवाक्शाख एषोऽश्वत्थः सनातनः ।**
**तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥**
**तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ।**
**एतद्वै तत् ॥ १ ॥**

**ऊर्ध्वमूलो अवाक्शाख एषोऽश्वत्थः सनातनः**—अयं च मन्त्रखण्डः 'ऊर्ध्वमूलमधश्शाखमिति गीताव्याख्यानावसरे भगवता भाष्यकृता व्याख्यातः । इत्थं हि तत्र भाष्यम् । 'यं संसाराख्यमश्वत्थमूर्ध्वमूलमधश्शाखमव्ययमश्वत्थं प्राहुः श्रुतयः ऊर्ध्वमूलो अवाक्शाख एषोऽश्वत्थः सनातनः, 'ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद सम्प्रति' इत्याद्याः । सप्तलोकोपरि निविष्टचतुर्मुखस्यादित्वेन तस्योर्ध्व-मूलत्वम् । पृथिवीनिवासिसकलनरपशुमृगक्रिमिकीटपतङ्गस्थावरान्ततया अधश्शा-खत्वमिति । तद्विलक्षणमेव ब्रह्मेति दर्शयति—**तदेव शुक्रमिति** । पूर्वमेव व्याख्यातोऽयं मन्त्रः ॥ १ ॥

**यदिदं किंच जगत्सर्वं प्राण एजति निस्सृतम् । महद्भयं**
**वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥**

**य इदं किंच जगत्सर्वं प्राण एजति निस्सृतम् महद्भयं वज्रमुद्यतं**— अयं च मन्त्रखण्डः 'कम्पना'दिति सूत्रे भगवता भाष्यकृता व्याख्यातः । तत्रामुं मन्त्रं प्रस्तुत्य 'कृत्स्नस्य जगतः अस्मिन्नङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितानां सर्वेषां ततो निस्सृतानां तस्मात्संजातमहाभयनिमित्तमेजनं कम्पनं श्रूयते । तच्छासनातिवृत्तौ किं भविष्यतीति महतो भयात् वज्रादिवोद्यतात् कृत्स्नं जगत्कम्पत इत्यर्थः । 'भयादस्याग्निस्तपती' त्यनेनैकार्थ्यात् । महद्भयं वज्रमुद्यतमिति पञ्चम्यर्थे प्रथमे'ति भाषितम् । विवृतं चैतत् श्रुतप्रकाशिकायाम् 'प्राण इति सप्तम्यन्तपदसामर्थ्यात् स्थितानामित्यध्याहारः । कुतो निस्सृतानामित्यपेक्षायां प्रकृतस्यैवापादनत्वमाह—तत इति । एजनं कम्पनमिति । एजृ कम्पन इति हि धातुः । प्रत्यवायभयात् स्वस्वकार्येषु प्रवृत्तिः कम्पनम् । उद्यतवज्रादिव परमपुरुषात्सञ्जातेन भयेन कृत्स्नं जगत् कम्पत इत्यर्थ, इति । अत्र महद्भयं वज्रमुद्यतमिति चत्वारि पदानि पञ्चम्यर्थप्रथमान्तानि । आद्यं पञ्चम्यर्थप्रथमान्तपदद्वयं भयवाचि । उत्तरं तु पदद्वयं तद्धेतुभूतप्राणशब्दितपरब्रह्मपरमिति द्रष्टव्यत् । केचित्तु बिभेत्यस्मादिति भयम् भयानकमित्यर्थः । महाभयानकोद्यतवज्रवत् स्वस्मान्निस्सृतं प्राणशब्दितपरमात्मा कम्पयति । एजतीत्यस्य ण्यन्तगर्भोऽप्यर्थ इत्यपि अमुमप्यर्थं वर्णयन्ति । **य एतद्विदुरमृतास्ते भवन्ति** – स्पष्टोऽर्थः । 'अत एव प्राण' इत्यधिकरणन्यायात् प्राण शब्दस्य परमात्मपरत्वे न विवाद इति द्रष्टव्यम् ॥ २ ॥

**भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च**
**वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥**

**भयादस्याग्निरि**ति । धावतिशब्दः इन्द्रादीनां स्वव्यापारप्रवृत्तिपरः । शिष्टं स्पष्टम् ॥ ३ ॥

**इह चेदशकद्बोद्धुं प्राक् शरीरस्य विस्रसः । ततस्सर्गेषु**
**लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥**

**इहचेदि**ति । शरीरस्य **विस्रसः** विस्रंसनात् पतनात्प्रागिह लोके ब्रह्म बोद्धुं अशकच्चेत् अशक्नुवन् चेत् विकरणव्यत्ययः छान्दसः । ततः—तस्मात् ज्ञाना-

भावद्धेतोः सृज्यमानसर्वलोकेषु जन्मजरामरणादिमत्त्वलक्षणशीर्यमाणत्वाय भवतीत्यर्थः। तस्मात् शरीरपातात्प्रागेव आत्मज्ञानाय यतेतेति भावः ॥ ४ ॥

**यथादर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके। यथाप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥५॥**

आत्मनो दुर्बोधत्वमेवाह—**यथेति**। यथा दर्शे चन्द्रिकाया अभावात् न स्पष्टः प्रतिभासः तथा इह लोके आत्मनीत्यर्थः। यद्वा—यथा **आदर्शे**—दर्पणे प्रतीयमानं वस्तु साक्षाद्दृष्टवस्तुवत् प्रत्यङ्मुखत्वादिकल्पितार्थानवरुद्धतया नोपलभ्यते, तथेहात्मविषयिणी प्रतीतिरित्यर्थः। लोकान्तरेपि तथेत्याह—**यथा स्वप्ने तथा पितृलोके**। यथा स्वप्नदर्शनस्य जाग्रद्दर्शनवत् सम्यक्तया संशयादिविरोधितया पुनरनुसन्धानयोग्यत्वाभावः तथा पितृलोक इत्यर्थः। **यथाप्सु परीव ददृशे तथा गन्धर्वलोके**। यथा जलान्तस्थवस्तुनो नेतरवत् स्पष्टप्रकाशः, तद्वत् परिददृश इव न वस्तुतः परितो दृश्यत इत्यर्थः। गन्धर्वलोकेप्यापाततः प्रतीतिमात्रमित्यर्थः। **छायातपयोरिव ब्रह्मलोके**—यथा छायातपयोर्मिश्रणे शुद्धातपवर्तिपदार्थवन्नोपलम्भः। एवं ब्रह्मलोकेपि न सम्यगुपलम्भः। अतो दुरधिगममात्मतत्त्वमिति भावः। यद्वा—ब्रह्मलोके यद्यपि छायातपयोर्विविच्योपलम्भवदात्मानात्मस्वरूपयोर्विविच्योपलम्भस्संभवति, तथापि नात्रत्यानामात्मतत्त्वं सुलभमिति भावः ॥ ५ ॥

**इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत्। पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥**

**इन्द्रियाणामिति**। पृथग्भूतानामुत्पद्यमानानामिन्द्रियाणाम्। इन्द्रियाणामित्येतद्देहादीनामप्युपलक्षणम्। **उदयास्तमयौ च यत्**—यदित्यव्ययं यावित्यर्थे। यौ उत्पादविनाशौ यश्च परस्परवैलक्षण्यलक्षणपृथग्भावश्च तान् सर्वान् इन्द्रियादिगतान्मत्वा धीरो न शोचतीत्यर्थः। परस्परवैलक्षण्योत्पादविनाशाः ज्ञानैकाकारे नित्ये आत्मनि न सन्तीति ज्ञात्वा न शोचतीत्यर्थः ॥ ६ ॥

**इन्द्रियेभ्यः परं मनो मनसस्सत्त्वमुत्तमम्। सत्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ७ ॥**

**अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यत् ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८॥**

देहविविक्तप्रत्यगात्मयाथात्म्यज्ञानेऽपि भगवच्छरणागतिरेवोपाय इति पूर्वोक्तं शरणवरणमेव प्रतिपादयति— **इन्द्रियेभ्य परमित्यादिना** मन्त्रद्वयेन। इन्द्रियेभ्य इत्येतदर्थानामप्युपलक्षणम्। 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मन' इत्यनेनैकार्थ्यात्। सत्त्वशब्दो बुद्धिपरः। 'मनसस्तु परा बुद्धि'रिति पूर्वोक्तेः। **अलिङ्गः**—लिङ्गागम्यः। परत्वं च वशीकार्यतायां विवक्षितम्। परस्य च वशीकरणं शरणागतिरेव। शिष्टं स्पष्टम्॥ ७॥ ८॥

**न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्।**
**हृदा मनीषा मनसाभिक्लृप्तो य एत(नं वि)द्विदुरमृतास्ते भवन्ति॥ ९॥**

**न सन्दृशे तिष्ठतीति**। अस्य रूपं स्वरूपं विग्रहो वा व्यापकत्वादेव सन्दर्शनविषये अभिमुखतया न तिष्ठतीत्यर्थः। अथवा दृश्यं नीलरूपादिकं नास्तीत्यर्थः। अत एव **न चक्षुषा पश्यति कश्चनैनमिति**। स्पष्टोऽर्थः। **हृदा मनीषेत्यादि**—अयमंशस्सर्वत्रप्रसिद्ध्यधिकरणे व्यासार्यैः 'हृदेति भक्तिरुच्यते। मनीषेति धृतिः। 'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैन'मिति पूर्वार्धमेकरूपं पठित्वा 'भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीहे' ति महाभारते उक्तम्। अभिक्लृप्तः आप्त'इति विवृतः। 'धृत्या समाहितात्मा भक्त्या पुरुषोत्तमं पश्यति। साक्षात्करोति प्राप्नोतीत्यर्थः। 'भक्त्या त्वनन्यया शक्य' इत्यनेनैकार्थ्यादिति वेदार्थसङ्ग्रहे प्रतिपादितम्। **य एनं विदुरिति**। स्पष्टोऽर्थः॥ ९॥

**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।**
**बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्॥ १०॥**

**यदा पञ्चेति**। ज्ञायते अनेनेति व्युत्पत्त्या ज्ञानानि—इन्द्रियाणीत्यर्थः। "सप्तगते"रित्यधिकरणे व्यासार्यैस्तथा व्याख्यातत्वात्। अध्यवसायोपेतं मन एव बुद्धिशब्देनोच्यते। अत एव तत्र भाष्यम् 'अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहंकारचित्तशब्दैर्व्यपदिश्यत' इति। शरीरान्तस्सञ्चरणं विहाय मोक्षार्थगमनं परमा गतिरिति तत्रैव स्पष्टम्॥ १०॥

**तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।**
**अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥**

**तां योगमिति** । **तां**—पूर्वमन्त्रनिर्दिष्टां बाह्याभ्यन्तरकरणधारणां परमां गतिं योग इति मन्यन्ते । उक्तं च व्यासार्यैः । "परमा गतिर्योग इत्यर्थ" इति । अप्रमत्तस्तदा भवति इन्द्रियाणां निर्व्यापारत्व एव अवहितचित्तता भवति । चित्तावधानं किमर्थमित्यत्राह—**योगो हि प्रभवाप्ययाविति** । योगस्य प्रतिक्षणापायशालितया अवधानमपेक्षितमिति भावः । यद्वा इष्टप्रभवानिष्टाप्ययलक्षणसर्वपुरुषार्थसाधनत्वाद्योगस्य तत्र अप्रमत्ततया भवितव्यमिति भावः ॥ ११ ॥

**नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।**
**अस्तीति ब्रुवतोन्यत्र कथं तदुपलभ्यते ॥ १२ ॥**

**नैव वाचेति** । स्पष्टोर्थः । प्राणपादे "सप्त गतेर्विशेषितत्वाच्चेति । इन्द्रियाणि सप्तैव । "सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहितास्सप्तसप्त" इति सप्तानामेव परलोकगतिश्रवणात् । "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत" इति योगदशायामिन्द्रियाणां परिगणितत्वाच्च सप्तैवेति प्राप्ते उच्यते । "हस्तादयस्तु स्थितेऽतो नैवम्"—शरीरे स्थिते आदानादिलक्षणकार्योपयोगित्वाद्धस्तादयोपि इन्द्रियाण्येव । अतो नैवम् । "दशेमे पुरुषे प्राणाः आत्मैकादशः" इति । आत्मशब्देन मनोऽभिधीयते, "इन्द्रियाणि दशैकं च" "एकादशं मनश्चात्र" इति श्रुतिस्मृतिभ्यां इन्द्रियसङ्ख्यानिश्चिता । न्यूनसंख्यावादा उपकारविशेषाभिप्रायाः, अधिकसंख्यावादाश्च मनोवृत्तिभेदा" दिति स्थितम् ॥ अमुमेवार्थमुपपादयति — **अस्तीतीति** । अस्तीति ब्रुवतः शब्दादन्यत्रेत्यर्थः । तस्योपनिषदेकगम्यत्वादिति भावः ॥ १२ ॥

**अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।**
**अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १३ ॥**

**अस्तीत्येवेति** । तत्त्वं भावयतीति तत्त्वभावः अन्तःकरणं । तेन परमात्मा अस्तीत्येवोपलब्धव्यः । वेदान्तवाक्यैरस्तीत्युपलब्धस्य मनसाप्यस्तीत्येवं मननिदिध्यासने कर्तव्ये इत्यर्थः । उभयोर्द्वयोः उभाभ्यां शब्दमनोरूपाभ्यां अस्तीत्येवोप-

लब्धस्य ज्ञातवतः भुक्ता ब्राह्मणा इतिवदयं निर्देशः। तत्त्वभावः प्रसीदति मनः प्रसन्नं भवति। निर्दुष्टं भवतीत्यर्थः ॥ १३ ॥

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥**

**यदा सर्वे प्रमुच्यन्त** इति। **कामाः**—दुर्विषयविषयकमनोरथाः हृद्गताः यदा शान्ता भवन्ति। तदनन्तरमेवायमुपासकः **अमृतो भवति**—विश्लिष्टाश्लिष्टपूर्वोत्तरदुरितभरो भवतीत्यर्थः। **अत्र ब्रह्म समश्नुते**—अत्रैवोपासनवेलायां ब्रह्मानुभवतीत्यर्थः। 'समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य' त्यत्र भाष्यम्—'अनुपोष्य शरीरेन्द्रियादिसंबन्धमदग्ध्वैव यदमृतत्वं उत्तरपूर्वाघयोरश्लेषविनाशरूपं प्राप्यते तदुच्यते यदा सर्वे प्रमुच्यन्त इत्यादिकया श्रुत्येत्यर्थः। अत्र ब्रह्म समश्नुत इति च उपासनवेलायां यो ब्रह्मानुभवः तद्विषयमित्यभिप्रायः' इति ॥१४॥

**यदा सर्वे प्रभिद्यन्ते हृदयस्येह (स्यैव) ग्रन्थयः।**
**अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १५ ॥**

उक्तमेवार्थमादरेणाभ्यस्य उपदेष्टव्यांशः एतावानेवेत्युपसंहरति— **यदा सर्वे प्रभिद्यन्त** इति। ग्रन्थयः ग्रन्थिवद्दुर्मोचा रागद्वेषादयो यदैव प्रमुच्यन्त इत्यर्थः। **एतावदनुशासनम्**—अनुशासनीयं उपासकस्य कर्तव्यत्वेन उपदेष्टव्यमेतावदेव। वक्ष्यमाणमूर्धन्यनाडीनिष्क्रमणार्चिरादिगमनादिकं न साधकस्य कृत्यं, किन्तु उपासनप्रीतभगवत्कृत्यमिति भावः ॥ १५ ॥

**शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका।**
**तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥**

'विमुक्तश्च विमुच्यत' इति पूर्वमुक्तां द्वितीयां परममुक्तिमाह—**शतं चैका चेति**। हृदयस्य प्रधाननाड्यः शतं चैका च सन्ति। तासां मध्ये एका सुषुम्नाख्या ब्रह्मनाडी मूर्धानमभिनिस्सृता। तया नाड्या ऊर्ध्वं ब्रह्मलोकं गच्छन् देशविशेषविशिष्टब्रह्मप्राप्तिपूर्वकस्वरूपाविर्भावलक्षणां मुक्तिं प्राप्नोतीत्यर्थः। अन्यास्तु नाड्यः **विष्वङ्ङुत्क्रमणे** नानाविधसंसारमार्गोत्क्रमणायोपयुज्यन्ते। **विष्वक्** विततः नाड्यः

अन्योत्क्रमणे उपयुज्यन्त इति व्यासार्यैर्व्याख्यातम् । इदं च वाक्यं भगवता बादरायणेन उत्क्रान्तिपादे चिन्तितम् । तथा हि—मूर्धन्यया शताधिकया नाड्या विदुषो गमनं, अन्याभिरविदुष इति नियमो नोपपद्यते । नाडीनां भूयस्त्वात् अतिसूक्ष्मत्वाच्च दुर्विवेचतया पुरुषेणोपादातुमशक्यत्वात् । 'तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती'ति यादृच्छिकीमुत्क्रान्तिमनुवदतीति युक्तमित्येवं प्राप्ते पूर्वपक्षे—'तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया' इति सूत्रेण सिद्धान्तितम् । तस्य चायमर्थः । तदोकः—तस्य जीवस्य स्थानं हृदयं अग्रज्वलनं अग्रेज्वलनं प्रकाशनं यस्य तदिदमग्रज्वलनम् । तेन अग्रज्वलनेन प्रकाशितद्वारो भवति । 'तस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य' इति श्रुतेः । एतावद्विद्वदविद्वत्साधारणम् । विद्वांस्तु शताधिकया मूर्धन्ययैव नाड्या उत्क्रामति । न चास्या नाड्या विदुषो दुर्विवेचत्वम् । विद्वान् हि परमपुरुषाराधनभूतात्यर्थप्रियविद्यासामर्थ्यात् विद्याशेषभूततयाऽऽत्मनोऽत्यर्थप्रियगत्यनुसरणयोगाच्च प्रसन्नेन हर्दोन परमपुरुषेणानुगृहीतो भवति । ततस्तां नाडीं विजानातीति तया विदुषो गतिरुपपद्यत इति । प्रकृतमनुसरामः ॥ १६ ॥

**अङ्गुष्ठमात्रः पुरुषोन्तरात्मा सदा जनानां हृदये सन्निविष्टः।**
**तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ॥ तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥**

**अङ्गुष्ठमात्र इति** । स्पष्टोर्थः । **तं स्वाच्छरीरादिति** । यथा देवदत्तः स्वाच्छरीराद्विलक्षण इत्युक्ते स्वशब्दः समभिव्याहृतदेवदत्तसम्बन्धिपरामर्शी, एवं पूर्वनिर्दिष्टान्तरात्मसंबन्धिपरामर्शी स्वशब्दः । ततश्चायमर्थः । तं जनानामन्तरात्मानं तच्छरीरभूतात् जनशब्दिताच्चेतनात् **प्रवृहेत्**—विविच्य जानीयात् । 'जुष्टं यदा पश्यत्यन्यमीश' मिति श्रुत्युक्तरीत्या धारकत्वनियन्तृत्वशेषित्वादिना विलक्षणं जानीयादित्यर्थः । **मुञ्जात्**—तृणविशेषात् । **इषीकां**—तन्मध्यवर्तिस्थूलतृणविशेषमिव ॥ **धैर्येण**—ज्ञानकौशलेनेति पूर्वेणान्वयः । **तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति** । उक्तोर्थः । द्विर्वचनमुपदेशसमाप्त्यर्थम् ॥ १७ ॥

**मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् । ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो विद्ध्यात्ममेव ॥ १८ ॥**

आख्यायिकार्थमुपसंहरति—**मृत्युप्रोक्तामिति** । नचिकेताः **मृत्युप्रोक्तां** आत्मविद्यां, यदा पञ्चेत्यादिना उक्तयोगविधिं च **लब्ध्वा**—प्राप्य 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति श्रुत्युक्तरीत्या ब्रह्म प्राप्य, आविर्भूतगुणाष्टकोऽभूदित्यर्थः । **अन्योऽप्येवं यो विद्ध्यात्ममेव**—अध्यात्मविद्यां यो अन्योपि वेत्ति सोपि एवमेव नचिकेता इव भवतीत्यर्थः ॥ १८ ॥

**सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ ओं शान्तिश्शान्तिश्शान्तिः ॥ हरिः ओं ॥ १९ ॥**

॥ इति कठोपनिषदि षष्ठवल्ली ॥

॥ द्वितीयाध्यायस्समाप्तः ॥

॥ कठवल्ली समाप्ता ॥

---

शिष्याचार्ययोः शास्त्रीयनियमातिलङ्घनकृतदोषप्रशमनार्था शान्तिरुच्यते । **स ह नाववतु**—सः विद्याप्रकाशितः परमात्मा । हशब्दः प्रसिद्धौ । नौ शिष्याचार्यौ **अवतु**—स्वस्वरूपप्रकाशनेन रक्षतु । **सह नौ भुनक्तु**—विद्याप्रचयद्वारा आवां सहैव परिपाल्यतु । यद्वा विश्लेषमन्तरेण आवां सहितावेव यथा स्याव तथा परिपाल्यत्वित्यर्थः । **सह वीर्यं करवाहै**—सनियमकविद्याप्रदानेन विद्यायास्सामर्थ्यं निष्पादयावहै । नियमाभावे विद्या निर्वीर्या भवतीति भावः । **तेजस्वि नावधीतमस्तु**—नौ आवयोः यदधीतं तत् तेजस्वि अस्तु, वीर्यवत्तरं भवत्वित्यर्थः । **मा विद्विषावहै**—'यश्चाधर्मेण विब्रूते यश्चाधर्मेण पृच्छति । तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति' । इति स्मृत्युक्तरीत्या अधर्माध्ययनाध्यापननिमित्तो द्वेष आवयोर्माभूदित्यर्थः । **शान्तिश्शान्तिश्शान्तिः**— त्रिर्वचनं सर्वदोषशान्त्यर्थम् ॥

इयं चोपनिषत् भगवत्परैवेति भगवता बादरायणेन समन्वयाध्याये त्रिभिरधिकरणैर्निर्णीतम् । तत्र 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' इति वाक्ये ब्रह्मक्षत्रयोरोदनत्वरूपणेन भोज्यत्वस्य वा भोग्यत्वस्य वा प्रतीतेः तत्प्रतिसंबन्धी यस्येति षष्ठ्यन्तयच्छब्दनिर्दिष्टो भोक्ता जीव एव स्यात्; परमात्मनो भोक्तृत्वासंभवादिति पूर्वपक्षं कृत्वा, 'अत्ता चराचरग्रहणात्, प्रकरणाच्च, गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्, विशेषणाच्चे'ति चतुर्भिस्सूत्रैस्सिद्धान्तः कृतः । तेषां चायमर्थः । 'उभे भवत ओदनः' इति ओदनप्रतिसम्बन्धितया प्रतीयमानः अत्ता परमात्मैव । ब्रह्मक्षत्रशब्दगृहीतनिखिलचराचरसंहर्तृत्वस्यात्र मन्त्रे प्रतिपादनात् । अत्र ब्रह्मक्षत्रशब्दयोः निखिलचराचरलक्षकत्वप्रकारः, ओदनशब्दस्य विनाश्यत्वलक्षकत्वप्रकारश्च एतन्मन्त्रव्याख्यानावसरे प्रतिपादितस्तत्रैवानुसंधेयः । 'महान्तं विभुमात्मान'मिति प्रस्तुतत्वेन तस्य ब्रह्मप्रकरणमध्यगतत्वाच्च । ननु ऋतं पिबन्तावित्युत्तरमन्त्रे कर्मफलभोगान्वयिनोरेव प्रतिपादनात्, परमात्मनश्च जीववत् कर्तृत्वेन वा अन्तःकरणवत् करणत्वेन वाऽन्वयासंभवात्, परमात्मप्रकरणमध्यगतत्वं नास्तीत्याशंक्योक्तं 'गुहां प्रविष्टावात्मानौ हि तद्दर्शना'दिति । गुहां प्रविष्टौ जीवपरमात्मानावेव । तयोरेवास्मिन्प्रकरणे गुहाप्रवेशदर्शनात् । 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहित'मिति परमात्मनो गुहाप्रवेशः श्रूयते । 'या प्राणेन संभवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती'ति जीवस्यापि गुहाप्रवेशो दृश्यते । अतः द्वयोरपि गुहाप्रवेशदर्शनात् तयोरेवपिबदपिबतोश्छत्रिन्यायेन 'ऋतं पिबन्ता'विति निर्देशस्य संभवात्, ऋतं पिबन्ताविति मन्त्रेण न परमात्मप्रकरणविच्छेदश्शक्यशङ्कः । 'विशेषणाच्च' । अस्मिन्प्रकरणे 'ब्रह्मजज्ञं देवमीड्यं विदित्वे'ति जीवपरयोरुपास्यत्वोपासकत्वादिना विशेषितत्वात् तयोरेवोपासनसौकर्याय एकाधिकरणस्थत्वप्रतिपादनार्थत्वात् 'ऋतं पिबन्ता'विति मन्त्रस्य जीवपरप्रतिपादकत्वमेव । अतः यस्य ब्रह्म च क्षत्रं चेति मन्त्रः परमात्मपर एवेति निर्णीतम् ।

तथा 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते' इति मन्त्रे अङ्गुष्ठमात्रतया निर्दिश्यमानो जीव एव; अङ्गुष्ठमात्रत्वस्य जीवधर्मतया 'प्राणाधिपस्संचरति स्वकर्मभिरङ्गुष्ठमात्रो रवितुल्यरूपः' 'अङ्गुष्ठमात्र

पुरुषं निश्चकर्ष यमो बलात्' इति श्रुतिस्मृतिप्रसिद्धत्वादिति पूर्वपक्षं कृत्वा—'शब्दादेव प्रमितः' 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्', 'कम्पनात्' 'ज्योतिर्दर्शनात्' इति चतुर्भिस्सूत्रैः सिद्धान्तः कृतः। तेषां चायमर्थः। अङ्गुष्ठप्रमितः परमात्मा, शब्दादेव 'ईशानो भूतभव्यस्य'इति ईश्वरत्ववाचकेशानशब्दादेव। ननु कथं तर्हि परमात्मनोऽङ्गुष्ठमात्रत्वमित्यत्राह—'हृद्यपेक्षया तु मनुष्याधिकारत्वात्'। हृदि हृदये परमात्मनो वर्तमानत्वात् तदपेक्षया अङ्गुष्ठमात्रत्वमुपपद्यते। न च खरतुरगादीनामङ्गुष्ठशून्यानां हृदयस्याङ्गुष्ठप्रमितत्वाभावात् तदन्तर्वर्तिनः परमात्मनः कथमङ्गुष्ठमात्रत्वमिति वाच्यम्। उपासनाविधायिशास्त्रस्य मनुष्याधिकारिकत्वात् तेषां चाङ्गुष्ठसंभवात् तद्धृदयवर्तिनः अङ्गुष्ठसमपरिमाणहृदयावच्छेदनिबन्धनाङ्गुष्ठप्रमितत्वे नानुपपत्तिः। 'कम्पनात्'। 'यदिदं किंच जगत्सर्वं प्राण एजति निस्सृतम्। महद्भयं वज्रमुद्यत'मिति समस्तप्राणिकम्पनहेतुभयहेतुत्वस्यास्मिन्नङ्गुष्ठप्रमिते आम्नानात् तस्य च परमात्मधर्मत्वस्य 'भीषास्माद्वातः पवत' इत्यादिश्रुतिप्रतिपन्नत्वात् अङ्गुष्ठप्रमितः परमात्मा। 'ज्योतिर्दर्शनात्'। 'न तत्र सूर्यो भाति न चन्द्रतारकमि'ति अङ्गुष्ठप्रमिते सकलतेजश्छादकज्योतिस्सम्बन्धप्रतिपादनात् तादृशज्योतिस्सम्बन्धस्य आथर्वणे ब्रह्मसम्बन्धितया प्रतिपादितत्वाच्च अङ्गुष्ठप्रमितः परमात्मेत्यर्थः॥

तथा—'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिः बुद्धेरात्मा महान्परः। महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः।' इति वाक्ये सांख्यप्रक्रियाप्रत्यभिज्ञानात् पंचविंशातिरिक्तपुरुषनिषेधाच्च सांख्याभिमतमब्रह्मात्मकं प्रधानमेव अव्यक्तशब्देनाभिधीयत इति 'आनुमानिकमप्येकेषामिति चेदिति सूत्रखण्डेन पूर्वपक्षं कृत्वा 'शरीररूपकविन्यस्तगृहीतेर्दर्शयति च' 'सूक्ष्मं तु तदर्हत्वात्' 'तदधीनत्वादर्थवत्' 'ज्ञेयत्वावचनाच्च' 'वदतीति चेन्न प्राज्ञो हि प्रकरणात्' 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' 'महद्वच्चे'ति सप्तभिः सूत्रैस्सिद्धान्तः कृतः। तेषां चायमर्थः। आनुमानिकं नाव्यक्तशब्दाभिलप्यम्। उपासनोपयोगिवशीकरणाय 'आत्मानं रथिनं विद्धि शरीरं रथमेव चे'ति वाक्ये रथिरथादिभावेन रूपितेषु आत्मशरीरबुद्धिमनइन्द्रियविषयेषु रथरूपकात्मना 'शरीरं रथमेव चे'ति विन्यस्तस्य शरीरस्यैवाव्यक्तशब्देन ग्रहणसंभवात्। अस्मिंश्च प्रकरणे

इन्द्रियादिवशीकरणप्रकारस्यैव 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यादिदर्शनात्, तदनुसारेणाव्यक्तशब्देन शरीरमेव गृह्यते। ननु कथमव्यक्तशब्देन व्यक्तस्य शरीरस्याभिधानम्। तत्राह—'सूक्ष्मं तु तदर्हत्वात्'। भूतसूक्ष्ममव्याकृतं ह्यवस्थाविशेषमापन्नं शरीरं भवति। ततश्च कारणवाचिना अव्यक्तशब्देन स्थूलं शरीरमेवोपचारादुच्यत इत्यर्थः। ननूक्तशब्दस्य मुख्य एवार्थोऽस्तु, कुतः स्थूलशरीरे लक्षणाभ्युपगन्तव्येत्यत्राह—तदर्हत्वादिति। स्थूलशरीरस्यैव कार्यार्हत्वात्, तस्यैव वशीकार्यत्वाय प्रतिपादनस्यापेक्षितत्वात्, अव्यक्तशब्देन कारणवाचिना स्थूलशरीरलक्षणा उचितेति भावः। ननु यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते, कापिलतन्त्रसिद्धोपादाने कः प्रद्वेष इत्यत्राह—'तदधीनत्वादर्थवत्'। अस्मन्मते अव्यक्तस्य परमात्माधीनतया तदधिष्ठितत्वेन प्रयोजनवत्त्वमस्ति। सांख्यमते तदनभ्युपगमात् तस्य निष्प्रयोजनत्वमिति भावः। 'ज्ञेयत्वावचनाच्च'। यदि तन्त्रसिद्धमव्यक्तमेवाविवक्षिष्यत्, तदास्य ज्ञेयत्वमवक्ष्यत्। व्यक्ताव्यक्तज्ञविज्ञानान्मोक्षं वदद्भिस्तान्त्रिकैस्तेषां सर्वेषां ज्ञेयत्वाभ्युपगमात्। नचास्य ज्ञेयत्वमुच्यते। अतो न तन्त्रसिद्धस्येह ग्रहणम्। 'वदतीति चेन्न प्राज्ञो हि प्रकरणात्'। 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' इत्यव्यक्तस्य ज्ञेयत्वमनन्तरमेव श्रुतिर्वदतीति चेन्न। 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति प्राज्ञस्य परमात्मनः प्रकरणात् स एव अशब्दमस्पर्शमिति मन्त्रे ज्ञेयत्वेन निर्दिश्यते, न तन्त्रसिद्धमव्यक्तम्। 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च'। अस्मिन्प्रकरणे हि उपायोपेयोपेतॄणां त्रयाणामेव ज्ञेयत्वोपन्यासः 'अन्यत्र धर्मादन्यत्राधर्मादि'ति प्रश्नश्च दृश्यते। नाव्यक्तादेः। 'महद्वच्च'। यथा 'बुद्धेरात्मा महान्पर' इत्यत्रात्मशब्दसामानाधिकरण्यान्न तन्त्रसिद्धं महत्तत्त्वं गृह्यते, एवमव्यक्तमप्यात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम्। अत इयमुपनिषत्सर्वापि परमात्मपरेति त्रिभिरधिकरणैर्निर्णीतम्॥

क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदारः।
वामागमाध्वगवदावदतूलवातो रामानुजस्स मुनिराद्रियतां मदुक्तिम्॥

॥ इति कठोपनिषदि षष्ठवल्लीभाष्यम्॥

॥ इति श्री रङ्गरामानुजमुनिविरचितं कठोपनिषद्भाष्यं समाप्तम्॥

श्रीः

# कठोपनिषद्भाष्यटिप्पणी

श्रीनिवासं परं ब्रह्म प्रणिपत्य प्रणीयते ।
रङ्गरामानुजमुनिकठभाष्यस्य टिप्पणी ॥

## प्रथमवल्ली

श्रिया महालक्ष्म्या सादरसंश्रितवक्षस्स्थलम् । अञ्जनाचलश्शृङ्गारं शेषाचलगरुडाचलनारायणाचलाञ्जनाचलसिंहाचलवृषभाचलवेङ्कटाचलाः सप्त अचलाः । तदुपलक्षणार्थमिह अन्यतमस्य अञ्जनाचलस्य ग्रहणम् । तस्मिन् भासमानं सर्वहृदयाह्लादकं उत्तमरसं भगवन्तं श्रीनिवासमित्यर्थः ।

१. स्वस्तये तार्क्ष्यम् ऋवे. १०–१७८–१.

५. "स एवमुक्तः पुत्र एकान्ते परिदेवयाञ्चकार । कथमिति । उच्यते । बहूनां शिष्याणां पुत्राणां वा एमि प्रथमः सन् मुख्यया शिष्यादिवृत्त्येत्यर्थः । मध्यमानां च बहूनां मध्यमयैव वृत्त्या एमि । नाधमया कदाचिदपि । किंस्विद्यमस्य कर्तव्यं प्रयोजनम्. मया प्रत्तेन करिष्यति यत्कर्तव्यमद्य । नूनं प्रयोजनमनपेक्ष्यैव क्रोधवशादुक्तवान् पिता" । [इति] ॥

"तथापि तत् पितुर्वचो मृषा माभूदित्येवं मत्वा परिदेवनापूर्वकमाह पितरं शोकाविष्टं किं मयोक्तमिति । (अनुपश्येति)" इत्यन्यत्र ।

६. तथेति चार्थे । यथेत्यनुषज्यते । तदाह यथा चेति । पूर्वे यथा आसन् तदनुपश्य । परे च यथा भवन्ति तत्प्रतिपश्य । कथमासन् कथं भवन्ति । तत् स्पष्टयन्नाह सस्यमिवेति । पूर्वे सर्वेऽम्रियन्त । इदानीन्तना अपि म्रियन्ते । ते सर्वे पुनर्जनिष्यन्ते । तस्मात् सर्वजन्तुसाधारणोऽयं जननमरणधर्मः । स चेन्ममापि तत्र कः शोकः इति कृत्स्नो मन्त्रः (मृषावादप्रसङ्गं विना) शोकापनोदनार्थं पितुराश्वासनपरोऽपि भवितुमर्हतीति भाति ।

७. "प्रोष्यागतं यममात्या भार्या वा ऊचुर्बोधयन्तः ।"

८. "अनिर्ज्ञातप्राप्येष्टप्रार्थना आशा । निर्ज्ञातप्राप्यार्थप्रतीक्षणं प्रतीक्षा ।" इत्यन्यत्र ।

९. "यद्यपि भवदनुग्रहेण सर्वं मम स्यात् तथापि त्वदधिकसम्प्रसादनार्थमनशनेनोपोषितामेकैकां रात्रिं प्रति त्रीन् वरान् वृणीष्व अभिप्रेतार्थविशेषान् प्रार्थयस्व" इत्यन्यत्र । तस्मादिति तच्छब्देन अनश्नतो रात्रित्रयवासं परामृश्य तस्मात्प्रति तत्स्थाने इत्यर्थे 'प्रतिनिधिप्रतिदाने च यस्मात्' इति सूत्रेण पञ्चमीति किं युक्तमिति पर्यालोचनीयम् ।

१०. "प्रतीतः लब्धस्मृतिः । स एवायं पुत्रो ममागत इति प्रत्यभिजानन्नित्यर्थः ।"

११. एतदनुरोधेन 'त्वां दर्शिवान्' इति मूलपाठेन भाव्यमिति भाति। तदैव छन्दः-सामञ्जस्यमपि। यथास्थिते द्वादशाक्षराणि भवन्ति। त्रिष्टुभि एकादशभिरेव भाव्यम्।

१४. तत् मया उच्यमान अग्निं तदनुबन्धि चान्यत्। "स्वर्गाय हितं स्वर्गसाधनमग्निं प्रजानन् विज्ञातवानहं प्रब्रवीमि। तन्निबोधेति च शिष्यबुद्धिसमाधानार्थं वचनम्। अग्निं स्तौति—अनन्तलोकाप्तिं स्वर्गलोकफलप्राप्तिसाधनम्। अथो अपि प्रतिष्ठामाश्रयं जगतः विराड्रूपेण। तमेतमग्निं मयोच्यमानं जानीहि। निहितं स्थितं—गुहायां विदुषां बुद्धौ निविष्टमित्यर्थः"।

१५. "लोकादिं लोकानामादिं प्रथमशरीरित्वादग्निम्।"

१६. अस्य तुष्ट इति तोषहेतुत्वं पूर्वमुक्तम्। आदरव्यञ्जनाय वचनकर्मत्वं वक्तुं मृत्योर्माहात्मत्वविशेषणं दातुं च पुनरिह 'तमब्रवीत् प्रीयमाणो महात्मा' इत्युच्यते। **सृङ्काम्**। अन्यत्र काप्यदृष्टमव्युत्पादितमिदं पदम्। सृ गतौ कै शब्दे इति धातुद्वयात् सरत्का—प्रसरच्छब्दा इत्यर्थे पृषोदरादित्वेन सृङ्केति रूपं भवतीति कृत्वा शब्दवतीं रत्नमालामिति व्याचक्षत इति भाति। "यद्वा सृङ्काम् अकुत्सितां गतिं कर्ममयीं गृहाण। अन्यदपि कर्मविज्ञानमनेकफलहेतुत्वात् स्वीकुर्वित्यर्थः।" इत्यर्थान्तरमप्यन्यत्रोक्तम्। परन्तु अनन्तरवल्ल्यां 'नैतां सृङ्कां वित्तमयीमवाप्तः' इति पुनःप्रयुक्तस्यास्य पदस्य "नैतामवाप्तवानसि सृङ्कां सृतिं कुत्सितां मूढजनप्रवृत्तां वित्तमयीं धनप्रायाम्" इति कुत्सिता गतिरिति व्याख्यानं दृश्यते। सृधातोः सृतिरर्थः। 'का' इति कापुरुष इत्यादाविव कुत्सितार्थे। परनिपातादि पृषोदरादिपाठात् इति निष्पत्तिरभिमतेति भाति। एवं कुत्सिता गतिरिति उपरि व्याख्याने स्थिते कथमिह अकुत्सिता गतिरिति व्याख्यानं युक्तमिति विमृश्यम्। कुत्सितामित्येव स्थितःपाठः वरदानप्रकरणे अयमर्थो न संगत इति बुध्याऽन्यथाकृतः स्यादपि। कुत्सितत्वं ज्ञानमार्गापेक्षयाऽवरत्वम्। न तु गर्हितत्वमिति।

२०. किञ्चेति। 'अन्यदप्याह एतमग्निमिति' इत्यर्थः। 'एतममिमिति। किञ्च' इति वा पाठः।

२२. "अतिसृज विमुञ्च एनं वरं मा मां प्रति"।

२३. अत्र देवैरपि विचिकित्सितम्। "किलेति। भवत एव नःश्रुतम्।" तादृशमिदम्। किञ्च त्वं यत्र सुविज्ञेयमात्थ तादृशम्। किञ्च त्वादृगन्यो वक्ता दुर्लभः। अतिदुर्लभवक्तृकम्। किञ्च यो यो वरो दीयेत तस्मात्सर्वस्मादधिकम्।

२४. यावदिति सामान्ये नपुंसकम्। यावतीः शरदो जीवितुमिच्छसि तावतीःशरदो जीवेत्यर्थः।

२५. काम्यमानानामिति। कामानां मध्ये ये कामाः उत्कृष्टा इत्यर्थः, तद्भाजमित्यस्मा दर्थाद्विशिष्टोऽयमर्थः।

२७. "श्वो भविष्यन्ति न वेति सन्दिह्यमान एव येषां भावो भवनं त्वयोपन्यस्तानां भोगानां, ते श्वोभावाः"।

२९. "अजीर्यतां वयोहानिमप्राप्नुवताम् अमृतानां सकाशमुपेत्य उपगम्य"। इत्येवं व्याख्यानेऽपि अजीर्यताममृतानामिति मुक्तावस्था ग्राह्या। यमस्यापि मुक्तेः सिद्धत्वात् भविष्यन्तीमपि दशां वर्तमानवद् भूतवच्चोपचरति। 'अनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्' इति हि वक्ष्यति।

३०. योऽयमित्यादि श्रुतिवचनं, यतः 'नान्यं तस्मादहं वृणे' इति उत्तमो न श्रूयते। अपि तु नान्यं नचिकेता वृणीत इति प्रथमः। अत एव वर्तमानानुपपत्तेः स्मेति पूरणमिति भावः।

यावत् नचिकेतःसंज्ञमिदं शरीरं ध्रियते तावत् नान्यं वरं वरिष्ये इति दृढमात्मनोऽध्यवसायं व्यञ्जयितुकामः स्वयमेवात्मानं प्रथमपुरुषवद् व्यवहरतीत्यपि युक्तं भाति।

---

## द्वितीयवल्ली

१. प्रेय इतीव प्रेयोऽपि च।

२. ताविति पुल्लिङ्गोपपत्तये श्रेयःप्रेयःपदार्थाविति। श्रुतौ पुल्लिङ्ग कर्तृत्वोपपत्तये तयोःस्वातन्त्र्यव्यञ्जनाय।

३. 'सृङ्काश्चेमामनेकरूपां गृहाण' इति पूर्वमधिकदरत्वेन यमेन दत्तां रत्नमालां नचिकेता न प्रतिजग्राह। तत इदमिदानीमाह यमः 'नैतां सृङ्कां वित्तमयीमवाप्तः' इति। इत्यपि युक्तम्।

५. घनीभूते तमसि वर्तमाना इव। आत्मानं पण्डितं मन्यमाना इत्यध्याहृत्य योज्यम्। तात्पर्यगत्या धीरं मन्यमाना इत्यपि विवक्षितम्। द्रम गतौ।

६. "सम्परेयत इति सम्परायः परलोकः। तत्प्राप्तिप्रयोजनः साधनविशेषः शास्त्रीयः साम्परायः॥" भावप्रकाशिका—"सम्यगवश्यम्भावेन परा परस्तात् देहपातस्य पश्चात् ईयते गम्यत इति सम्परायः। तत्प्राप्त्यर्थः साधनविशेषःसाम्परायः"—इति॥

'दुर्मानीत्यर्थः' इत्यस्यानन्तरं 'तस्यायं लोकः परश्च लोको नास्तीत्यर्थ' इत्यधिकं विषयवाक्यदीपिकायां पठ्यते।

उतपदस्य योजनाऽत्र न दर्शिता। पर उत परश्चेत्यभिप्राये चशब्दाध्याहारो नोक्तःस्यात्। उत अपि च मानी पुनःपुनरित्युपर्यन्वयाभिप्राय उचित इति भाति। पाठान्तरं वा। संयमने त्वनुभूयेति सूत्रे श्रुतप्रकाशिकायां नायं पाठः कण्ठोक्तो दृश्यते। 'अयं लोको नास्ति न पर इति' इति भाष्योद्धृतस्य मन्त्रस्य नञ्द्वयघटितं प्रतीकं धृत्वा 'अत्रामुत्र च सुखं नास्तीत्यर्थः' इत्यर्थवर्णनमात्रं तु कृतं दृश्यते। अयं लोको नास्तीत्यंशस्य अत्र सुखं नास्तीति विवरणम्, न पर इति मानी पुनःपुनर्वशमापद्यते मे' इत्यवशिष्टांशस्य अमुत्र च सुखं नास्तीति विवरणम् इति यद्यपि स्थितं कथञ्चिद् योजयितुं शक्यम्, तथापि एतैरुपनिषद्भाष्यकारैः श्रीभाष्ये वा विवरणे वा अवलोकितःपाठः 'अयं लोको नास्ति पर' इति द्वितीयनञ्रहित एवेति तदनुसारेणैव भावप्रकाशिकायां व्याख्यायि—

"अयमेव लोकः स्त्र्यन्नपानादिरूपोऽस्ति। न परः परलोकः इति मानी इति मननशीलः तदनुरूपमाचरन् पुनःपुनः जन्ममरणप्राप्त्या मम वशमापद्यत इत्येवमयं लोक इत्यत्र एवशब्दमभ्याहृत्य व्याख्यातं परैः। आचार्यास्तु च-शब्दमभ्याहृत्य व्याचक्षते—अत्रामुत्र च सुखं नास्तीत्यर्थः इति। देहान्तरोपभोग्यमिति शेषः"।

इति। अत्र परेषामभिमतो यः पाठः तमेव कृत्वा आचार्या व्याचक्षत इत्येतैरुच्यत इति स्फुटम्। तत्र चकाराध्याहारेण अयं परश्च लोको नास्तीत्यर्थे सति अस्यार्थस्य इतिमानीत्युत्तरत्र कथमन्वयः। न हि कश्चिदयं लोको नास्तीति मन्येत इति शङ्कापरिहारायोक्तं देहान्तरेति। वर्तमाने देहे अयं लोको नास्तीति सत्यं न कश्चिन्मन्येत। देहान्तरोपभोग्यं तु ऐहिकमामुष्मिकं वा सुखं नास्तीति देहातिरिक्त आत्मा नास्तीत्यजानन् सर्वो मन्येतैव। ऐहिकसुखमेव चायं लोक इत्युच्यते, इत्याशयः। एवं भावप्रकाशिकायामेकधा व्याख्याने कृते कस्मिंश्चित् श्रीभाष्यकोशे 'अयं लोको नास्ति पर उत मानी' इति स्थितं पाठं दृष्ट्वा तदनुसारेणेह प्रकारान्तरेण व्याख्यातमिति भाति।

८. "न हि नरेण मनुष्येण अवरेण प्रोक्तः अवरेण हीनेन प्राकृतबुद्धिनेत्येतत्। उक्तः एषः आत्मा यं त्वं मां पृच्छसि। न हि सुष्ठु सम्यक् विज्ञेयः विज्ञातुं शक्यः। यस्मात् बहुधा अस्ति नास्ति कर्ताऽकर्ता शुद्धोऽशुद्ध इत्याद्यनेकधा चिन्त्यमानः वादिभिः। कथं पुनः सुविज्ञेय इति। उच्यते। अनन्यप्रोक्ते अनन्येन अपृथग्दर्शिनाऽऽचार्येण प्रतिपाद्यब्रह्मात्मभूतेन प्रोक्ते उक्ते आत्मनि गतिः अनेकधा अस्तिनास्तीत्यादिलक्षणा चिन्ता गतिः अत्र अस्मिन्नात्मनि नास्ति न विद्यते। सर्वविकल्पगतिप्रत्यस्तमितरूपत्वादात्मनः। अथ वा स्वात्मभूते अनन्यस्मिन् आत्मनि प्रोक्ते अनन्यप्रोक्ते गतिरत्र अन्यावगतिर्नास्ति। ज्ञेयस्यान्यस्याभावात्। ज्ञानस्य ह्येषा परा निष्ठा यदात्मैकत्वविज्ञानम्। अतो गन्तव्याभावान्न गतिरत्रावशिष्यते। संसार-गतिर्वाऽत्र नास्ति अनन्य आत्मनि प्रोक्ते नान्तरीयकत्वात् तद्विज्ञानफलस्य मोक्षस्य। अथ वा प्रोच्यमानब्रह्मात्मभूतेनाचार्येण अनन्यतया प्रोक्ते आत्मनि अगतिः अनवबोधोऽपरिज्ञानमत्र नास्ति। भवत्येवावगतिस्तद्विषया श्रोतुः तदनन्योऽहमित्याचार्यस्येवेत्यर्थः। एवं सुविज्ञेय आत्मा आगमवताऽऽचार्येणानन्यतया प्रोक्तः। इतरथा अणीयान् अणुतरः अणुप्रमाणादपि सम्पद्यत आत्मा। अतर्क्यं अतर्क्यः अणुप्रमाणो न तर्क्यः स्वबुद्ध्यभ्यूहेन केवलेन तर्केण। तर्क्यमाणेऽणु-प्रमाणे केनचित् स्थापिते आत्मनि ततोऽणुतरमन्योऽभ्यूहति। ततोऽप्यन्योऽणुतरमिति। न हि तर्कस्य निष्ठा क्वचिद् विद्यते।"

९. आपनीयेति स्थाने आपनेयेति।

१०. अनित्यमिति लिङ्गव्यत्ययश्छान्दसः। शेवधिः अनित्यं वस्तु इति जानामीति वा। शेवधिरिति शेवधिरित्येतत् अनित्यं जानामीति वा।

११. एतन्मन्त्रपर्यन्तमौपोद्घातिकमेकं प्रकरणम्। तत्र प्रथममन्त्रे—हितं प्रियमिति मार्गद्वयमर्थानर्थफलमस्तीति, द्वितीये—तत्र धीरेण विविच्य प्रियपरित्यागेन हितं परिग्राह्यमिति, तृतीये—नचिकेतसा विवेकिना प्रियं परित्यक्तमिति, चतुर्थे—प्रियस्य अविद्येति नाम, हितस्य

विद्येति, तत्र नचिकेतसा हितरूपा विद्या परिगृहीतेति, पञ्चमषष्ठयोः—अविवेकिनां प्रिय एव आसक्तिर्भवति न तु विद्यामार्गप्रतिभानमपीति, सप्तमे— परतत्त्वविषये समीचीन आचार्यो वा शिष्यो वाऽतिदुर्लभ इति, अष्टमे—असमीचीनाचार्योपदेशाद्वा आचार्यमनपेक्ष्य स्वप्रज्ञयैव वा तद्ज्ञानं दुर्लभमिति, नवमे—एवंविधो दृढो निश्चयो नचिकेतसो जात इति, दशमे—केवलकर्मणां परमपुरुषार्थप्राप्त्युपायकोटिप्रवेशविरहेऽपि पूर्वोपदिष्टो नाचिकेताग्निस्तदौपयिको भवतीति तदनुष्ठानेन स्वस्य आचार्यकोपयुक्तज्ञानसम्पत्तिरस्तीति, एकादशेऽस्मिन्—नचिकेतसः परतत्त्वजिज्ञासा सुदृढेति श्रवणाधिकारः पूर्ण इति च ज्ञापितम् ।

"स्तोमं स्तुत्यम् । महत् अणिमाद्यैश्वर्याद्यनेकगुणसंहतम् । स्तोमं च तन्महच्च निरतिशयत्वात् स्तोममहत् ।" इति स्तोममहदित्येकपदपाठं कृत्वाऽन्यत्र व्याख्यातम् ।

१२. 'येयं प्रेते विचिकित्सा मनुष्ये' इति पूर्वं नचिकेतसः तृतीये प्रश्ने मरणानन्तरं मनुष्यस्य किमात्यन्तिक उच्छेदः अथ वाऽस्त्यनुवृत्तिरिति साक्षात् पृष्टम् । तथापि न तावदेव तस्य जिज्ञासितम् । 'अभिध्यायन् वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ।' 'यत् साम्पराये महति' इत्यादि वदतो हि नचिकेतसो बुद्धौ 'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च' इति प्रसिद्धजननमरणप्रबन्धव्यतिरिक्तेन केनचिदर्थेन स्थितेन भाव्यम् । यदा चरमं मरणं भवति यतःपरं पुनरपि जननादिक्लेशो नास्ति तादृशे मरणे वृत्ते ततः परं मनुष्यः कथं भवतीति प्रश्नार्थः । एतेन मोक्षस्वरूपं पृष्टं भवति । एवं प्राप्ये मोक्षे पृष्टे तत्साधनमपि पृष्टमेव । यमश्च नचिकेतसो विषयवैराग्यातिशयं दृष्ट्वा जिज्ञासिते मोक्षस्वरूपे अस्ति तस्य कश्चन विवेक इति जानन् 'स्तोमं महदुरुगायं दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः' इति मोक्षे प्राप्यं वस्तु नचिकेतसा गृहीतत्वेन प्रस्तुत्य तं प्रशशंस । एवं नचिकेतःप्रशंसाया अवसितत्वात्, तेन दृष्टतया उक्तं वस्तु 'तं दुर्दर्श'मिति तच्छब्देन परामृश्य अत्र विशेषणात्, प्रश्नोत्तरतया यद् वक्तव्यं तदस्मिन् मन्त्रे उक्तमिति अनन्तरमन्त्रे 'एतच्छ्रुत्वा' इत्यादिना प्रतीतेश्च तृतीयप्रश्नस्य इदं प्रतिवचनमिति ज्ञायत इति वेदितव्यम् । अत्र हर्षशोकौ जहातीत्यनेन प्रेतो मनुष्योऽस्ति न वेति सन्देहस्य "अस्ति, संश्च हर्षशोकरहितोऽस्ती" ति परिहारोऽभिप्रेतः । 'अध्यात्मयोगाधिगमेन देवं मत्वा' इत्यनेन स्वात्मवेदनपुरस्सरं भगवदुपासनं तादृशमोक्षस्योपाय इति ज्ञापितम् । उपासनानुरूपत्वात् प्राप्तेः उपास्यमानभगवत्सान्निध्यतदनुभवावपि मुक्तस्य स्त इत्यपि व्यञ्जितम् । 'एतमाप्य' इत्यनन्तरमेवेदं स्पष्टीक्रियते ।

१३. प्रवृह्य । वृहू उद्यमने । उद्यमनं ग्रहणम् उपादानम्, प्रत्युपसर्गः प्रतिष्ठत इत्यादाविव विपरीतार्थः । तदुक्तं पृथक्कृत्येति ।

नचिकेतसं हे नचिकेतः त्वां प्रतीत्यर्थः ।

१४. तद्वदेति प्रार्थनात् प्रार्थयितुर्नचिकेतस इदं वचनमिति स्पष्टम् । किं पुनरिह पृच्छ्यत इति तु न स्पष्टम् । तथापि प्राप्यस्य ब्रह्मणः प्राप्तुर्जीवस्य प्राप्त्युपायस्योपासनस्य चोपरि

यमेन विशदमुपदिश्यमानत्वात् तदर्थ एवायं प्रश्न इति ज्ञायते। प्रसिद्धाभ्यां धर्माधर्माभ्यां कालत्रयवर्तितया ज्ञातपदार्थेभ्यश्च यथा विलक्षणं प्राप्यब्रह्मादि भवति तदुपदेष्टव्यमित्यर्थः।

२०. भाष्ये 'उभयत्रान्वये' इत्यत्र 'गुहायामप्यन्वये' इति 'उत्तरत्राप्यन्वये' इति वा उचितः पाठः।

ज्यायानेभ्यो लोकेभ्य इत्यादिष्विति। इत्यादिषु परमात्मधर्मतयाऽवगतत्वादित्यर्थो बोध्यः। इत्यादिभिरित्येवं पाठान्तरेण वा केनचिद् भाव्यम्।

२१. मादृशजनादिति। मदन्य इत्यत्रास्मच्छब्दः ब्रह्मविदुपलक्षणार्थ इति तात्पर्यम्।

२२. नित्यत्वेनेति। अवस्थितमित्यत्र अवेत्युपसर्गाभिप्रेतोऽयमर्थः। अत्रापि पाठः शोध्य इति भाति।

२४. यस्तु पुरुषार्थमपीति। अपिर्भिन्नक्रमः। अतिलङ्घयापीति।

२५. किश्चित् प्रतीति। ब्रह्म वा तदितरद्वा प्रतीत्यर्थः। कश्चित् प्रतीति किं पाठोऽस्तीत्यन्वेष्टव्यम्।

असाधारणरूप एव भाष्य इति। असाधारणगुण एवेति युक्तम्। असाधारणाकार एवेति पाठान्तरम्।

तं दुर्दर्शमित्यादिचतुर्दशमन्त्रात्मकमिदं साक्षादुपदेशपरं प्रकरणम्। तत्र प्रथमे उपदेष्टव्यस्यातिसङ्ग्रहेणोपदेशः। अनन्तरे उपसंहारः। तृतीये विस्तरेणोपदेशाय नचिकेतसः प्रश्नः। तत्र उपासनकाले अनुसन्धेयस्य प्रणवस्योपदेशः स्तुतिश्च सर्वे वेदा इत्यादिषु त्रिषु मन्त्रेषु। अथ जीवात्मस्वरूपोपदेशो द्वयोः। अथानन्तरे परमात्मोपदेशः। तत्र गुहायां निहित इति यदुक्तं तस्योपपादनं 'आसीनो दूरं व्रजति' 'अशरीरं शरीरेषु' इति द्वयोः। धातुप्रसादादिति यदुक्तं तत् किश्चिद् विवृतं 'नायमात्मा प्रवचनेन लभ्यः' इत्यनेन। अनेनानुष्ठेयोपायविशेष आक्षिप्यते। एतदङ्गतया वर्जनीयान्याह 'नाविरत' इत्युत्तरमन्त्रेण। परस्य ब्रह्मणो दुर्ज्ञानत्वकथनपूर्वकमुपदेशोपसंहारः चरमेण 'यस्य ब्रह्म च' त्यनेन।

---

## तृतीयवल्ली

१. सत्यपदवाच्येति। ऋतपदवाच्येति युक्तःपाठः। ननु एवम्भूता ब्रह्मविद इत्ययुक्तम्। ब्रह्मविदामत्र अश्रवणादित्यत्राह—केवलपञ्चाग्नीति।

अप्रकाशत्वप्रकाशत्वयोरिति। अनयोः रूपवदचेतनधर्मत्वादिति भावः।

उपष्टम्भकसुवर्णे इति। द्वन्द्वः। प्रथमाद्विवचनम्।

११. अत्र अन्ते 'भाषितम्' इत्यनन्वितं पठ्यते।

१३. 'इमं मन्त्रं प्रस्तुत्य' इत्यस्यानन्तरं 'इत्थं हि' इति स्थितमनन्वितम्।

१५. अत्र अवतारिका—उपसंहरतीति। उत्तरमन्त्रेऽप्येवं दृश्यते। तेनेह स्थितेयमवतारिका किं युक्तेति विमर्शनीयं भवति। परमात्मोपदेशोपसंहार इह। उपाख्यानोपसंहार उत्तरत्रेति वा ज्ञेयम्।

अस्यां वल्ल्यां योगः प्राधान्येन प्रतिपाद्यत इति स्फुटमेतत्। मन्त्राणां सङ्गतिरपि स्पष्टा।

## चतुर्थवल्ली

पूर्वोक्तार्थविशदीकरणार्थमेवास्य द्वितीयाध्यायस्य प्रवृत्तिः।

तत्र "अणोरणीयान्महतो महीयानात्मा" इत्यत्राभिप्रेतं सर्वात्मत्वं अस्यां चतुर्थवल्ल्यां प्राधान्येन प्रकाश्यते।

तत्र परमात्मविज्ञानार्थप्रवृत्तौ अधिकारिदौर्लभ्यं, परमात्मेतरस्य सर्वस्य हेयत्वं, तस्य सर्वेन्द्रियनियन्तृत्वं, मनोनियन्तृत्वं, शरीरनियन्तृत्वं, सर्वजगत्स्रष्टृब्रह्मनियन्तृत्वं, सामान्यतः सर्वजीवात्मनियन्तृत्वं, अग्निनियन्तृत्वं, तदितरसूर्यादिसर्वदेवतानियन्तृत्वं, सर्वदेशकालवर्तिसर्वपदार्थात्मत्वं, एवंविधत्वस्य मनोमात्रग्राह्यत्वं, शरीरे स्थितस्यापि निरवद्यत्वं, नित्यत्वं, भेदज्ञानिनामनर्थापातं तत्त्वज्ञानवतां निःश्रेयसं च क्रमेण पञ्चदशसु मन्त्रेषु प्रतिपाद्यन्ते।

१२. किंतु ईश्वरवाचिशब्दादेवेति। ईशत्ववाचीति श्रुतप्रकाशिकापाठः। अत ईशानशब्दस्य न श्रुतित्वमिति। श्रुतित्वे नारायणव्यावृत्तिर्भवतीति वादिनः प्रतिपक्षिणः सर्वथाऽत्र अवकाशो न देय इत्यभिप्रायेणेदम्। वस्तुतस्तु रुद्रप्रतीतिहेतुरूढिपरित्यागेन केवलयौगिकोऽपि सन् अयमीशानशब्दः श्रुतिर्भवति। अङ्गुष्ठमात्रः जीवः परमात्मा वेति संशयः। परमात्मसर्वेश्वर इति नार्थभेदोऽस्ति। 'जीवो वा सर्वेश्वरो वा' इत्यपि हि संशयप्रदर्शनं युज्यते। तत्र सर्वेश्वरत्वस्य साक्षाद्वाचकःशब्दः श्रूयमाणः श्रुतिः कथं न भवेत्? सर्वेश्वरत्वातिरिक्तेन केनचित् धर्मेण परमात्मात्मत्वे साध्यमाने स धर्मः लिङ्गपदाभिधेयो भवति। रूढिरेव श्रुतिरिति तु नियमो निर्निबन्धनः। निरपेक्षावाचकस्यैव श्रुतित्वात्।

कालत्रयेति। अद्य श्व इति भूतकालस्याप्युपलक्षणमिति भावः।

## पञ्चमवल्ली

१. पुरस्वामिनो यथा पुरं विविक्तं भवतीति। जीवात्मनः शरीरमत्यन्तं बाह्यमिति भावः।

२. पुनरप्यस्य सर्वात्मतामेव द्रढयतीति। 'देवं मत्वा' 'तमक्रतुः पश्यति' इत्युक्तोपासनोपयोगितया पूर्ववल्ल्यां प्रतिपादितमपि सर्वात्मत्वं पुनःप्रकारान्तरेणोच्यत इत्यभिप्रायः। शरीरादत्यन्तविविक्तः तदन्तःस्थो जीवात्मेति पूर्वस्मिन् मन्त्रे उक्तम्। तस्याप्यन्तरात्मा परं ब्रह्मेति इह विवक्षितमिति विभाव्यम्।

३. नियमनविशेषप्रदर्शनेन अन्तरात्मत्वं दृढीकर्तुं प्रवृत्तः ऊर्ध्वमिति मन्त्रः। सत्त्वप्रकृतयः सर्वेऽपीति। विश्वे देवा उपासत इत्यस्य यद्यपि चतुर्मुखादिसर्वदेवदन्यत्वमर्थो वक्तुं शक्यते, तथापि उपासनस्येह मोक्षार्थभक्तिरूपत्वौचित्यात् तत्र च मनुष्याणामप्यधिकारित्वात् साधारण्येन सत्त्वप्रकृतय इति व्याख्यानं कृतमिति बोध्यम्। 'देवसम्बन्धिनी सम्पद् दैवी। देवा भगवदाज्ञानुवृत्तिशीलाः' इति श्रीमद्गीताभाष्यसूक्तिरिह अनुसन्धेया।

४. एवं परमात्मानमुपासीनस्येति। एतेन पूर्वमन्त्रप्रस्तुतोपासनपर्यालोचनया तदनुगुणार्थविवरणमिह क्रियत इति ज्ञापितम्। यदा तु पूर्वत्र प्रधानप्रतिपाद्यस्य अन्तरात्मत्वस्य पर्यालोचनं क्रियते तदा अन्यथाऽपि योजनं शक्यम्। देही जीवात्मा देहवान् जायते। शरीरस्थः अथ शरीरे बाल्ययौवनादिक्रमेण वर्तते। विस्रंसमानः जरया प्रशिथिलगात्रो भवति। देहाद् विमुच्यमानः म्रियमाणो भवति। किमत्र परिशिष्यते देहादुत्क्रान्ते जीवात्मनि अत्र तेन त्यक्ते भूतपूर्वदेहे किं परिशिष्यते तदीयत्वेन व्यपदेशार्हं किं वस्तु अवतिष्ठते। न किमपीत्यर्थः। भूतपूर्वशरीरपिण्डस्य तत उत्क्रान्तस्य जीवात्मनश्च न कश्चन सम्बन्धोऽस्तीति भावः। पुरमेकादशद्वारमिति पूर्वमुक्तो विवेक इह दृढीकृतः। एवं शरीरं प्रति जीवस्य आत्मत्वमौपाधिकमस्थिरम्। जीवं प्रति परमात्मन आत्मत्वं तु स्वाभाविकमनिवर्त्यं यावत्स्वरूपभावीति वेदितव्यमिति।

५. तस्य...महिमानमाहेति। ऊर्ध्वं प्राणमित्यत्र अन्यपरतया व्यञ्जकतया च स्थितमिह तात्पर्येण स्पष्टमाहेति भावः।

६. आश्चर्य इति। विलक्षणाधिकारिलाभजनितविस्मयाभिव्यञ्जकमित्यर्थः।

७. हन्त त इत्यनेन सूचितमर्थमिति। परमात्मतत्त्वश्रवणविमुखसामान्यजनवृत्तान्तमित्यर्थः।

८. प्ररोचनयेति। विलक्षणाधिकारितां बोधयित्वा उत्साहजननेनेत्यर्थः। प्रकृतमनुसरतीति। पूर्वमन्त्रे विच्छिन्नं परमात्मोपदेशं पुनः परिगृह्णातीत्यर्थः।

इदमत्र भाति जीवात्मनो जीवनावस्थायां जीवनहेतुत्वरूपं माहात्म्यं 'न प्राणेन' इत्यनेन मन्त्रेणोच्यत इति स्थितं भाष्य एव। जीवनप्रतिद्वन्द्विमरणप्राप्त्यनन्तरावस्थायां तदवस्थाहेतुत्वरूपं माहात्म्यं वक्तुं हन्त त इत्यादि मन्त्रद्वयप्रवृत्तिः। हन्तेति पदमाग्निविद्योक्तरीत्या इदं परमं रहस्यमिति व्यञ्जयति। "गुह्यं सनातनं ब्रह्म प्रवक्ष्यामि। मरणं प्राप्य आत्मा यथा भवति तच्च प्रवक्ष्यामि" इति योजना। मरणानन्तरभाविनीं जीवात्मावस्थां वक्ष्यामि। तत एव तद्धेतुत्वरूपमाहात्म्यविशेषवत्तया ब्रह्मोपदिष्टं विद्धीति भावः। एवं जीवनप्रतिद्वन्द्वितयोपस्थितमरणोत्तरावस्थाहेतुत्वं प्रतिपाद्य अथ जीवनावस्थायामेव स्वाप्नार्थनिर्मातृत्वरूपं माहात्म्यमाह—य एष सुप्तेष्विति।

९. पुनरप्युपदिशतीति। दृष्टान्तप्रदर्शनेन वैशद्यं सम्पादयतीत्यर्थः।

१०. उदाहरणान्तरमिति। अग्निदृष्टान्तेन तस्य दुरुपगमत्वं मा शंकि। सूपगम एव सः तेजस्वित्वातिशयेऽपीति श्रुतिहृदयमिति भावः।

११. आत्मत्वाविशेषेऽपीति । पूर्वमन्त्रावधि अन्तरात्मत्वं सामान्यतो विशेषतश्चोपदिष्टम् । ततः अन्तरात्मत्वे जीवात्मवदस्य दोषसंस्पर्शः स्यादिति शङ्कापरिहारायास्य मन्त्रस्य प्रवृत्तिरिति भावः।

१२-१३. ये पश्यन्ति तेषामेव मुक्तिरिति । तमात्मस्थं येऽनुपश्यन्तीति धात्वर्थो विधेय इति भावः । मत्वेति पूर्वमुक्तं दर्शनाकारमेव मननमिति हृदयम् । शाश्वतं सुखं नित्य आनन्दः । तदुक्तं मुक्तिरिति । शाश्वती शान्तिः मोक्षप्रतिबन्धकस्य सर्वस्य आत्यन्तिकी निवृत्तिरित्यर्थः ।

१४. एवमुक्तः शिष्य आहेति । परमात्मस्वरूपविषयमुपदेशं समाप्य तदुपासनप्रस्तावं कृतं श्रुत्वा पुनरपि स्वरूपविषयस्यैव संशयविशेषस्य परिहरणाय तद्विषयं प्रश्नं करोतीत्यर्थः । एतदितीति । तत् मन्यन्ते निष्पन्नयोगाः । कथं मन्यन्ते। एतदिति निर्देश्यं मन्यन्ते । एतदिति निर्देश्यमित्यस्य कोऽर्थः । करतलामलकवदपरोक्षमित्यर्थः । परेत्वत्र अनिर्देश्यमिति पठित्वा व्याचक्षते । कथं रूपादिहीनमिति । रूपादिहीनत्वात् चक्षुषा तावन्न गृह्यते । चक्षुषा अगृहीतस्य मनसा भावनमसम्भवि । मनसा तदीयं रूपं विभाव्य भावयितुं शक्यमिति चेत्—तद्रूपं कथं विभावनीयम्—किं घटपटादिवदप्रकाशस्वरूपम् ; अथ वा दीपादिवत्प्रकाशस्वरूपम्। उत्तरत्रापि किं दीपादिवदेव साधारणप्रकाशस्वरूपं उतादित्यादिवत् विशिष्टप्रकाशस्वरूपम् ? इति प्रश्नाभिप्राय इति भावः ।

१५. एवमत्र पूर्वार्धे मन्यन्त इत्यत्र अधिकारिविशेषपरतया योजनं कृतम् । ये पुरुषार्थ विशेषसाधनाय प्रवर्तन्ते ते तत्साधनप्रवृत्तेः पूर्वं अयं पुरुषार्थः एवंविध इति निर्देश्यं विविच्य ज्ञातव्यं लोके जना मन्यन्ते । न हि साध्यस्य निष्कृष्टं ज्ञानं विना साधने प्रवृत्तिर्भवति । अतो मयापि तद् ज्ञातव्यम् । कथं तद् विजानीयामिति समानाधिकारिकमपि योजयितुं शक्यमिति भाति ।

सर्वातिशायिदीप्तिमानिति । किमादित्यादिवत् विशिष्टभानवदिति प्रश्नः । यथा तत्सन्निधौ आदित्यादीनां भानमेव नास्ति तथा विशिष्टभानवत् । न परमेषं तदपेक्षया आदित्यादीनामल्पत्वं भानम् , किन्तु इदमेषामल्पं भानमपि तदनुग्रहायत्तमित्युत्तरमिति भावः ।

---

## षष्ठवल्ली

योगोपदेशपरेयं चरमा वल्ली ।

१. तद्विलक्षणमेव ब्रह्मेति दर्शयतीति । वृक्षत्वरूपणेन तस्य छेद्यत्वनश्वरत्वासारत्वादिज्ञापनद्वारा तत्र वैराग्यजननमिहाभिप्रेतमिति भावः ।

२. प्राणशब्दितपरमात्मा कम्पयतीति । तथाच 'परमात्मनि यो रक्तः' इत्युक्तरीत्या परमात्मनि अनुरागातिशयं जनयितुं अस्मिन् अनन्तरे च मन्त्रे तस्य माहात्म्यं वर्ण्यत इति भावः ।

३. पूर्वमन्त्रे सामान्यत उक्तं जगत् कम्पत इति । तद् विशेषत इह क्रियते अग्न्यादीनां देवेषु प्रधानानां भये उक्ते इतरस्य सर्वस्यैव कैमुतिकेन तत् सिध्यति ।

४. तस्मात् शरीरपातात्प्रागेवेति । तथाच उपाये त्वराजननमस्मिन् मन्त्रे क्रियत इति भावः।

आत्मज्ञानायेति । मन्त्रे बोद्धुमिति । शास्त्राधीनः परमात्मबोधो विवक्षितः । सोऽपि निदिध्यासनपर्यवसाय्यभिप्रेतः ।

५. आत्मनो दुर्बोधत्वमिति । 'क इत्था वेद यत्र सः' इत्यादिना तस्य दुर्बोधत्वं पूर्वमुक्तम् । तथा सति कथमिह तस्य बोधः सम्पाद्यतत्तयोच्यत इति शङ्कायाः परिहारोऽत्र क्रियते । दुर्बोधत्वं यदुक्तं तत् तथैव । अथापि शास्त्राद् यावद् बोद्धुं शक्यते तावद् बुध्वा तदुपासनं कार्यमिति तात्पर्यमिति भावः ।

प्रत्यङ्मुखत्वादयो ये कल्पितार्थाः तैः अनवरुद्धतया अनाकुलतया ।

६. आत्मनि न सन्तीति ज्ञात्वेति । योगो वक्तव्यः । तत्र स्वात्मज्ञानमप्यङ्गम् । तदिह उपदिश्यत इति भावः ।

७-८. देहविविक्तेति । ज्ञानेऽपीत्यपिना तत्पूर्वकयोगः समुच्चीयते । अनेन मन्त्रद्वयेन योगविरोधिसर्वप्रतिबन्धकनिवर्तनपूर्वकतदुपकारकसर्वाङ्गसम्पादनमभिप्रेयत इति भावः ।

९. म्राह्य इति विवृत इति । पूर्वार्धे प्रकारान्तरेण दुर्ग्रहत्वमनूद्य उत्तरार्धेन भक्तियोगो विधीयत इति भावः ।

१०. योगस्वरूपमिह विशदीक्रियते ।

११. अप्रमत्ततया भवितव्यमिति । प्रमादवर्जनयत्न इह विधित्सित इति भावः ।

१२-१४. गभीरोऽयमर्थो मनसि प्रतिष्ठायै असकृत् प्रतिपादनमर्हतीत्यभिप्रायेण पुनर्भङ्ग्यन्तरेण योगप्रवृत्तिक्रम उच्यते । तत्र शास्त्रेतराबोध्यत्वं 'नैव वाचा' इत्यनेन मन्त्रेणोच्यते। प्रथमं शास्त्रतो ब्रह्म ज्ञातव्यमित्युक्तं भवति । अथानन्तरमन्त्रे "अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन च" इत्यनेनांशेन श्रवणानन्तरभाविनी मनननिदिध्यासने उच्येते । अवशिष्टांशेन मनसो नैर्मल्यप्रतिपादनद्वारा दर्शनसमानाकारप्रत्ययोऽभिप्रेतः । अनुष्ठानकाल एव जायमानं योगाभ्यासफलं 'यदा सर्वे प्रमुच्यन्ते' इत्यनेन मन्त्रेणोच्यते ।

१५. उक्तमेवार्थमिति । कामाः प्रमुच्यन्त इति योऽर्थ उक्तः स एव कामानां दुर्मोचत्वं तथापि उपासनेन अत्यन्तं निवर्तन्त इति योगवैभवं च प्रतिपादयितुं 'ग्रन्थयः प्रभिद्यन्ते' इत्यतिशयोक्तिभङ्ग्या उक्तः, न त्वर्थान्तरमिति भावः ।

१६. द्वितीयां परममुक्तिमिति । पूर्वं 'अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' इति शरीरपातात् प्रागेव भवन्ती मुक्तिरुक्ता । इह तु तत्पातादनन्तरं गतिविशेषेण देशविशेषं गत्वा प्राप्या निवृत्तिप्रसंगरहितनिरतिशयानन्दलाभरूपा मुक्तिरुच्यत इति ।

१७. यथा उपक्रमे 'तं दुर्दर्शं गूढमनुप्रविष्टं' इति तत्त्वहितपुरुषार्थसङ्ग्रहः कृतः तथेह उपसंहारेऽपि क्रियत इति बोध्यम् ।

१८. आख्यायिकार्थमिति । अध्यायद्वयस्य वल्लीषट्कस्य चायमुपसंहार इति भावः । तत्र विद्यामेतामिति प्रथमाध्यायस्य प्रधानप्रतिपाद्यार्थनिर्देशः । योगविधिश्चेति द्वितीयाध्यायस्य।

# पाठान्तराणि.

कोशसंकेतविवरणम्— श्रीवेंकटेश्वरप्राच्यकोशागारस्थः लिखितपत्रात्मकः— क. पूना-आनन्दाश्रममुद्रितः ख.

| पृ. | पं. | |
|---|---|---|
| ४ | १७ | प्रार्थयंश्च क. |
| ,, | २५ | प्रयुङ्क्ताम् क. |
| ६ | २ | त्वमेतन्नि ख. |
| ,, | १४ | पुनराह ख. |
| ,, | २१ | ददानि क. |
| ७ | १ | किंच विचित्रां ख. |
| ,, | ८ | त्रिभिः अग्निभिः क. |
| ,, | ११ | मन्त्रखण्डः ख. |
| ८ | ९ | प्रलयितितमैः क. |
| ११ | १८ | विशेषे उत्कर्षे क. |
| १४ | ११ | अन्ये विप्ति ख. |
| १५ | २४ | सुज्ञेय ख. |
| १६ | ६ | सुज्ञेय ख. |
| १८ | १२ | तत्रत्यान्–वर्णरतिप्रमोदान्–वर्णाः ख. |
| २० | २ | बहवोऽलोलुपन्त ख. |
| २० | ६ | नालोलुपन्त ख. |
| ,, | ८ | अद्भावश्च ख. |
| ,, | २५ | चशब्दश्चाध्याहार्य इति स्थाने 'क' कोशे 'इतिशब्दश्चार्थः' इत्यस्ति। तत्र 'इतिशब्द' इतिस्थाने उत-शब्द इति किं स्यादित्यालोच्यते। |
| २५ | ७ | विलक्षण उपायः क. |
| २६ | ७ | दर्शनादधर्मादन्यत्रेति प्रसि-द्धोपायविरोधिविलक्षणविरो-धिप्रश्न क. |
| ,, | १७ | न मत्ता- अपितु ख. |
| २८ | १ | तत्रैव शुद्धात्म ख. |
| ३१ | ९ | द्वाभ्यां सूत्राभ्यां ख. |
| ३३ | २४ | प्रतिपाद्यं दुर्विज्ञा ख. |
| ,, | २६ | दुर्विज्ञानत्व ख. |
| ३४ | ८ | तद्बलात् न जायते क. |
| ३५ | १० | प्रवचनशब्देन प्रवचनसाधनं मननं लक्ष्यते। उत्तरत्र 'न मेधया न बहुना श्रुतेने'ति वक्ष्यमाणध्यानश्रवणसमभि-व्याहारबलेन प्रवचनशब्देन मननस्यैव गृहीतु मुचितत्वात् ख. |
| ३७ | ७ | रूपासाधारणाकार एव ख. |
| ,, | १९ | सूपासत्व क. |
| ३८ | ११ | कर्मफलभोक्तृत्व ख. |
| ३९ | २५ | दुरुपासत्व क. |
| ४१ | २५ | पुरुषार्थसाधन ख. |
| ४८ | १ | इवैत् सुभृतो क. |
| ,, | ४ | पूर्वेणान्वयः। इदित्यवधारणे। क. |
| ,, | १२ | नातिक्रामति ख. |
| ५७ | ६ | आचितकमण्डित पुरुषतुल्या-नामेतेषां ख. |
| ५८ | १४ | स्वस्मान्निस्सृतं सकलं जगत् ख. |
| ,, | २० | स्वस्वव्यापार ख. |
| ६३ | ८ | जीवस्य ओकः–स्थानं क. |
| ,, | ९ | तस्य हैतस्य हृदयस्थ क. |
| ६४ | ८ | इवैव क. |
| ६५ | ३ | निरूपणेन ख. |
| ६७ | ५ | नन्वव्यक्तशब्दस्य क. |

# शुद्धिपत्रम्.

| पृ. | पं. | |
|---|---|---|
| १ | २४ | हितकाम |
| २ | ३ | धेनुर्दक्षिणे |
| ४ | ७ | इष्टं यागादि |
| ५ | ७ | विगतमन्यु |
| ,, | १० | मत्प्रेषितम् |
| ७ | १४ | परमात्मकत्वपर्यन्तोऽर्थः |
| ८ | ४ | ब्रह्मात्मकस्वस्वरूप |
| ९ | ३ | सूर्यान्तरं |
| ,, | २६ | किंच "श्वोभावा |
| ११ | १६ | ज्योतिष्टोमस्याह |
| १३ | १२ | स्मर्येते |
| १५ | ७ | मर्त्यः |
| ,, | ११ | पुल्लिंगतच्छब्देन परामर्शदर्शनात् 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इत्यत्रापि प्रविष्टाविति उपसर्जनतया निर्दिष्टस्य प्रवेशस्य तद्दर्शनादिति तच्छब्देन परामर्शदर्शनात् 'सर्वनाम्ना- |
| ,, | ,, | सन्निधिर्वृत्ति |
| १८ | ६ | वर |
| २१ | २५ | लभ्य इ |
| २२ | १९ | कामस्यापि |
| २४ | १७ | स्वरूपंच |
| ,, | २७ | म्रियते |
| २५ | २६ | सामानाधिकरण्य |
| २६ | ५ | मानसो |
| २८ | ६ | भावात् 'न तत्र सूर्यो |
| ३१ | १५ | सिद्ध्यति |
| ३२ | २० | सर्वेषाम |
| ४१ | ६ | प्रापयति |
| ४२ | २४ | मिन्द्रियादीनां |
| ,, | २५ | मनसी |
| ४३ | १२ | निर्देष्टव्ये |
| ,, | १४ | दात्मनि वर्तमान इति विशेषणस्य |
| ४४ | ४ | क्षयं |
| ४५ | १३ | परानश्नन्तीति |
| ,, | १५ | खानि |
| ४६ | १९ | स्वाप्नप्रपञ्चं |
| ४७ | १ | गुप्तिज्किङ्क्ष्व |
| ४८ | १२ | 'इत्यवधारणे' इत्यधिकम् । तथाच 'कश्चन–तत् सर्वात्मकं' इत्येव पाठ्यम् । |
| ५१ | १५ | आत्मैव |
| ५३ | २४ | सङ्कल्प्य सङ्कल्प्य |
| ५४ | २०-२१ | चक्षुर्मलादिभि |
| ५५ | २ | वार्थः । "इमौ स्म मुनिशार्दूल किंकरौ समुपस्थितौ' इत्युक्तरीत्या भक्तवश्य इति वार्थः । एकं बीजं |
| ६० | ४ | इन्द्रियेभ्यः |
| ६१ | ९ | प्राप्तुं |
| ६२ | २४ | स्वस्वरूपा |
| ६३ | १४ | हार्देन |

# कठोपनिषद्भाष्योदाहृतप्रमाणानां आकरसूची

Printed at Tirumalai-Tirupati Devasthanams Press, Tirupati and published by the Director Sri Venkateswara Oriental Institute. C. 250.—11 11-48.

HARIH OM

# KATHOPANISAD

I. 1.

*Uśan ha vai Vājaśravasaḥ sarvavedasam dadau |*
*tasya ha Naciketā nāma putra āsa ||*

Once, the son of Vājaśravas, desiring (some fruit) gave away all his possessions. He had a son named Naciketas,

COMMENTARY:

1. Let my *añjali* go to the Beauty of Añjanādri,[1] of the colour of common flax(*atasi*)-flower-bunch, with His chest adorned by Śrī.

2. Bowing to Vyāsa, Rāmānuja and other teachers, I shall write this comment, according to my intelligence, on the *Kaṭhopaniṣad*, for the delight of the learned.

*uśan:* Desirous. The word comes from the root *vaśa* meaning desire with the suffix *śatṛ*, which gets *samprasāraṇa* (*Pāṇini* I. i. 45) as enjoined in the sūtra beginning with *grahijya* (*Pāṇini*. VI. i. 16).

*ha vai*: These two are particles, (used to) indicate things that have transpired. 'The fruit' is to be supplied.

*vājaśravasaḥ*: son of Vājaśravas. Vājaśravas is one who has attained fame through gifts of food (*vāja*).[2] His son is Vājaśravasaḥ. Or it may be a name, merely, Vajaśravas.

The meaning is that the sage indeed performing the sacrifice called Viśvajit (conqueror of the world)[3] in which every

1. Beauty of Añjanādri is Śrī Veṅkateśvara.

2. cf. Sri Krishna Prem Yoga of the *Kaṭhopaniṣad* p. 14: meaning of Vājaśravasa.

3. The Viśvajit-sacrifice was performed by Mahābali when Vāmana came and asked for three paces of ground. symbolically the earth, Heaven and Self, thus completing the sacrifice fully, Vāmana is stated to be the subject dealt with by this Upaniṣad. cf. *Viṣṇusahasranāma : viśvam* (1).

possession is to be offered as fees for performance (*dakṣinā*) (to Ṛtviks), gave away in that sacrifice all his possessions. By the word '*uśan*' is indicated that the sacrifice, being one that is performed for getting some fruit, the fees, must necessarily be in every way correct (and proper).

*āsa* : *babhūva* : there was. Here (*bhū*) has not replaced the root '*as*' as in '*svasthaye tārkṣyam*' (for the well-being, the Garuḍa), since *liṭ* (Perfect tense) is a *sārvadhātuka* (*Pāṇini* III 4. 113) as enjoined in *Chandasy ubhayathā*.

I. 2.

*taṁ ha kumāraṁ santaṁ dakṣiṇāsu nīyamānāsu śraddhāviveśa somanyata.*

While the fees were being distributed, Śraddha overtook him, who was still young. He reflected thus:

COMMENTARY:

*tam :* Him, Naciketas

*kumāram santam :* who was still young[1]

*dakṣiṇāsu nīyamānāsu :* at the time of distribution of fees, namely, cows to the *ṛtviks* (the officiating priests)

*śraddhā :*[2] devotional mentality due to his wishing well for his father (*pitur-hita-kāma-prayuktā*)

*āviveśā:* overtook.

Even though the thing which helps in procuring consent (to officiate as priests) is called fee(s) (*dakṣiṇā*), and the consent is (given) only once in a sacrifice, since (the word fees) gains its significance on account of that consent, therefore the word fees (*dakṣiṇā*) has to be only a singular number; wherefore (*ata eva*) it is stated by Jaimini (*Mīmāmsā-sūtra* X. iii. 56) "O-milch cows in the passage cow is the fee of it" (*tasya dhenūr iti gavām*), that in the passage 'the milch cow is its fee' read in

1. cf. Krishna Prem "boy as he was."

2. Krishna Prem translates it as Faith, but it is not "blind faith" "accompanied by hidden doubt." It is true faith or "fair faith," which is a form of Knowledge.

the context of the one-day sacrifice called *bhū*, all the fees, the cows (112), the horse, & etc., belonging to the original sacrifice (*prakṛtasya*) are to be substituted by it (*dhenu*), this word fee here signifies some wealth (*bhṛti*). And it is used with reference to action as in "In this action this is the wage". It is also used with reference to the agent (*kartṛ*) as in "In this action, this is the wage to this person (agent)." Since therefore the fees are many on account of the officiating priests being many, the plural 'fees' (*dakṣiṇāsu*) is proper. Therefore, it is said in the *adhikaraṇa* in Chapter X beginning with the sūtra "If the gift is to the brahman (priest) the fee (to the Ṛk priest) will be less by it, with the modification the fee will be the same"[1] that, if the passage occuring in the sacrifice called Ṛtapeya "The fee is the Soma-vessel made of Udumbara (fig-wood)," it must be given to the Brahman-priest, who is friendly and of the same gotra," is to be one single sentence (which it is not), then, the Brahman-priest's share alone is to be substituted, since the word '*dakṣiṇa*' could signify it with its primary significance without any resort to the secondary significance (*lakṣaṇā*) in respect of the portion.

Now therefore it can be seen that even though the fee in reference to this (Viśvajit) sacrifice be one, there may be differences in the fees in reference to the *ṛtviks*, and as such, there is no impropriety in the (use of the) plural 'fees.'

I. i. 3.

*pītodakā jagdha-tṛṇā dugdha-dohā nirindriyāḥ* |
*anandā nāma te lokās tān sa gacchati tā dadat* ||

He who gives these (cows) by which the water has been drunk, the grass has been eaten, the milk has been given (and) which have become barren, goes to those worlds that are well-known as delightless.

COMMENTARY:

The manner of this devotional mentality (on the part of Naciketas) is thus shown:

1, *Yadi tu brāhmaṇāḥ tad imama tad-vikārasyāt.* Jaimini: *P. M. S.* X. iii. 72.

*pitodakāḥ*: Those (cows) by which (last) water has been drunk[1]

*jagdhatṛṇāḥ*: Those by which (last) grass has been eaten

*dugdhadohāḥ*: Those from which (last) milk has been drawn

*nirindriyāḥ*: Incapable of future progeny, worn out. In other words, 'useless.' He who gives (the cows) of this nature to the officiating priests deeming them as *dakṣiṇā* (fees) (goes to delightless worlds).

*anandā*: delightless. Are there not worlds known from scriptures which are delightless?

*tān*: to those (worlds)

*saḥ*: He, the sacrificer, goes to. Thus he (Naciketas) reflected: this is the meaning.

I. i. 4.

> *sa hovāca pitaram tata kasmai mām dāsyasīti dvityam tritīyam. Tam hovāca Mṛtyave tvā dadāmīti.*

> He spoke to his father: "Father, to whom will you give me," for the second (time), for the third (time). To him spoke (the father) thus: "To Death I shall give you"

COMMENTARY:

*sahovāca pitaram*: The most faithful Naciketas who thought that the fees that are being given are defective (bad) and who wished to make the sacrificial performance of his father good, even through giving himself away (as fees), approached his father and said:

*tata*: O Father!

*kasmai*: to which Ṛtvik by way of sacrificial fee

*mām*: me

*dāsyasi*: will you give.

[*saḥ*:] He (Naciketas) not having been paid any attention to by his father though addressed by him thus,

1. The idea is that these cows had drunk water for the last time, eaten grass for the last time etc. and which therefore are dying, are absolutely useless as gifts, for gifts must be of good cows and not of worthless ones.

*dvitīyam :* for the second time, (and)

*tṛtīyam api :* for the third time also spoke to him "To whom will you give me ?"

The father, pressed very much, became angry and told his son that he would give him away to Death.

I. i. 5.

*bahūnām emi prathamo bahūnām emi madhyamaḥ |*
*kim svid yamasya kartavyam yan mayādya kariṣyati ||*

I go ahead of many, I go in the midst of many. What is that Death has to do, which he would have done by me ?[1]

COMMENTARY :

Though thus spoken to (Naciketas) without fear or sorrow told his father thus: Of all those who go to the abode of Death I shall be either in the forefront or in the middle but never at the end. The intention is "I am not at all worried about going to the abode of Death." (If it be asked) what is it that (you are worried) about ? he replies :

*kimsvid :* What purpose[1] has Death got which He is going to, have done by me ? Is there any advantage with one so tender as me to Death of fulfilled desires, where the gift of me to Him will be of some use, as (the gift of me) to Ṛtviks (will be). Therefore it is about this alone that I am worried. This is the intention.

I. i. 6.

*anupaśya yathā pūrve pratipaśya tathā pare |*
*sasyam iva martyaḥ pacyate sasyam ivā jāyate punaḥ ||*

Reflect on how the ancestors (were) ; ponder how the others (present ones are). Man ripens like corn ; he is again born.

COMMENTARY :

(Naciketas) looking at the father of remorseful heart who thought on hearing these words of such a son, who was free

1. Krishna Prem : "What is the task that Yama, Lord of Death, will accomplish on me today ?"

from any fear or anger, "I said, I give you to Death 'out of anger' but I do not wish to give away such a son to Death," said:

*pūrve :* grandfather and others, as they were without any false speech; so also,

*apare* : the good men that are now even after them : in the same manner must you behave. This is the meaning.

*sasyam iva :* like corn

*martyaḥ* : the man becomes like corn worn out in a short while and, becoming worn out, dies, and like corn is he born again. In this mortal world which is transitory, what is the use of uttering falsehood. Keeping to truth send me to Death. This is the meaning.

I. i. 7.

*vaiśvānaraḥ praviśaty atithir brāhmaṇo gṛhān |*
*tasyaitām śāntim kurvanti hara Vaivasvatodakam ||*

The fire, the brahman-guest, enters the house. To him (they) this appeasement make. O son of the Sun! take water (unto him, Naciketas).

COMMENTARY:

That son (Naciketas), *having been thus sent away*, stayed at the gates of Death who was away, eating nothing for three nights. Then an old man at the gates (of Death's abode) told Death (Yama), who returned after having been away, thus :

Verily the God of Fire himself in the form of Brāhman-guest enters the house. To that fire good men perform this appeasement of the form of water for feet-cleansing and offering of seat, so that they may not be burnt by their disrespect to him. Therefore, O Vaivasvata![1] bring to Naciketas water for feet-cleansing.

*hara* means *ahara* : bring. This is the meaning.

I. i. 8.

*āśāpratikṣe saṁgatam sūnṛtān ca*
*iṣṭāpūrte putrapaśūṁś ca sarvān |*
*etad vṛṅkte puruṣasyālpamedhaso*
*yasyānaśnan vasati brāhmaṇo gṛhe ||*

Hope and expectations, contact (with good men), the true and kind words, sacrificial good deeds, beneficence, the sons and cattle of the unintelligent person at whose house a brāhman dwells starving, this (sin) destroys.[1]

COMMENTARY:

And they showed that failing to do it (honouring the guest) results in sinfulness (*pratyavāya*).

*yasya alpamedhasaḥ puruṣasya gṛhe :* In the house of which unintelligent person

*anaśnan :* starving

*Brāhmaṇaḥ* : guest

*vasati* : dwells

*tasya :* of him

*āśāpratīkṣe :* desire and will; or else, *āśā* means desire for the unaccomplished, and *pratīkṣā*, desire to get things which are existing.

*saṁgatam :* contact with the good

*sūnṛtām :* speech that is true and pleasant

*iṣṭāpūrte : iṣṭa* means sacrifice and others and *pūrta* means construction of tanks etc.

*putrān paśūṁś ca :* sons and cattle

*etad* : the sin of the form of starving

*vṛṅkte :* deprives, destroys is the meaning: from *vṛji varjane* : to deprive. (VIII conjugation *śnam*) or else this is a form from the root *vṛja varjane* (II conjugation) which omits the conjugational sign *śaḥ*.)

I. i. 9.

*tisro rātrīr yadavātsīr gṛhe me*
*'naśnan brahman natithir namasyaḥ* |
*namas te'stu brahman svasti me*
*'stu tasmāt prati trīn varān vṛṇiṣva* ||

1. This translation is in accordance with the commentary. But the text seems to be capable of another interpretation also.—" Hope and expectations etc. etc., (all) this of the unintelligent person at whose house a brāhman remains starving, the (starving brāhman) destroys."

O Brahman! since you, the respectful guest, have stayed without food in my house for three nights, let my salutations be to you, O Brahman! Let there be well-being to me. In return, therefore, choose three boons.

COMMENTARY:

Thus addressed by the elders, Death said to Naciketas:

*me gṛhe:* in my house, O Brahman fit to be revered, thou, the guest, have spent three nights without food. This is the meaning.

*namas te:* the meaning is clear

*tasmāt...:* therefore, for this reason

*me:* to me

*svasti:* well-being, so that I may be well

*trīn varān: prati:* three boons in return

*vṛṇīṣva:* choose.

Even though you are desireless, you should choose three boons corresponding to the three nights of fasting to favour me. This is the meaning.

I. i. 10.

*śāntasaṁkalpaḥ sumanā yathā syād*
*vītamanyur Gautamo mābhi mṛtyo* ।
*tvatprasṛṣṭam mā'bhivadet pratītaḥ*
*etat trayāṇām prathamam varam vṛṇe* ॥

O Death! (please make) Gautama (my father) free from all anxieties, well-disposed, free from anger towards me; (and) well pleased let him speak to me, sent back by you. This is the first of the three boons I elect.

COMMENTARY.

Thus being requested, Naciketas said:

*Mṛtyo:* O Death!

*śāntasaṁkalpaḥ:* free from anxiety of the form "having reached Death, what will my son do?"

*sumanāḥ:* with his mind settled in peace

*mābhi:* towards me

*Gautamaḥ :* Gautama, my father
*vītamanyuḥ :* freed from anger (*roṣa*)
*yathā syāt :* (make him) so as to be thus.
And
*tvat prasṛṣṭam :* sent back (home) by you
*mābhi :* towards me
*pratītaḥ :* pleased as before
*vadet :* would speak.
Or else
*abhi vadēt :* will bestow (on me) blessings, since the *abhivādana* is used to signify the giving of blessings in Śmṛti-texts such as *abhivadata, nābhivādayate*
*etad... :* the meaning is clear.

I. i. 11.

*yathā purastād bhavitā pratītaḥ*
*Auddālakir Āruṇir mat prasṛṣṭaḥ* |
*sukham rātrīḥ śayitā vītamanyus*
*tvām dadṛśivān* [1]*mṛtyumukhāt pramuktam* ||

Son of Uddālaka of Aruṇa-family, influenced by me will be well-disposed (towards you) as before. On seeing you released from the mouth of Death, free from anger, he will happily sleep in the nights.

COMMENTARY :

Asked thus Death replied : he will become as before well-disposed towards you. Auddālaki is to be taken as Uddālaka.; Āruṇi means son of Aruṇa. Or else he is a descendent of the two families, or else the son of Uddālaka and of the family of Aruṇa[2]

*mat prasṛṣṭaḥ :* influenced by me or as favoured by me, the meaning is 'due to my blessing.'

*sukham :* Having become free from anger in respect of you, he will sleep happily in the future nights. *Lut* (1st Future) signifies that he will get (thereafter) good sleep.

1. *darśivān* : Nir. Sa. Ed.
2. *Dvyāmuṣyāyaṇa* means the son of a lady who was given in marriage to an individual on the condition that her issue is to be deemed to be the son of the giver (of her). (Ānandagiri's Commentary).

*dadṛśivān : (darśivān)* : Having seen (you) is the meaning. This is a form ending with the suffix *kvasu*. The suffix *kvasu* is preceeded by *iṭ* according to the Vārtika (*Pāṇini* VII. 2.69 *Vārtika*). This, where there is no reduplication, is a Vedic grammatical exception to the rule (*Pāṇini*. VI. 1.8)

*matprasṛṣṭam* : if the reading is in the accusative (i.e. *matprasṛṣṭam* in the place of *matprasṛṣṭaḥ*) then the construction is 'you who are sent back by me'.

I. i. 12.

*Svarge loke na bhayaṁ kincanāsti*
*na tatra tvaṁ na jarayā bibheti* |
*ubhe tīrtvā aśanāyāpipāse*
*śokātigo modate Svargaloke* ||

There is no fear whatever in the Svarga-world (heaven). You are not (present) there. One is not afraid of old age. Getting over the two, thirst and hunger, transcending sorrow, one delights in the Svarga-world.

COMMENTARY :

Naciketas now asks for the second boon in two mantras (beginning with *Svarge loke......*). Here the world *Svarga* means the realm of liberation. How it is so, will be explained later.

*Mṛtyo* : O Death. There you are not the Lord. One in old age does not fear (death). One does not fear old age. 'The man that exists there' is to be supplied there (in the verse)

*ubhe* :...*aśanāyā* : Hunger. Here also *Svarga* means the world of liberation.

I. i. 13.

*sa tvam Agnim Svargyam adhyeṣi Mṛtyo*
*prabrūhi tam śraddadhānāya mahyam* |
*Svargalokā amṛtatvam bhajanta*
*etad dvitīyena vṛṇe vareṇa* ||

You of such nature, O Death, knowest the Agni leading to Svarga. Teach it to me who have much faith. Those who exist in Svarga-world attain immortality. This is the second boon I choose.

COMMENTARY :

*sa tvam :* You whose omniscience is well-known in Purāṇa, You know the fire which is helpful in the attainment of Svarga.

*yat* (ya) is the suffix signifying *prayojana* (utility) according to the passage "*yat* comes as suffix after *Svarga* and others" (*Gaṇapātha Pāṇini* V. i. 111). It will be clear later on that the utility of Agni of the form of fire-altar in attaining *Svarga* is through meditation.

*śraddadhānāya :* to one who has ardent desire for liberation. What is that which you will get attaining the Svarga-world ? The reply is :

*Svargalokāḥ* (*amṛtatvam*) *:* those whose world is Svarga ; this means those who have attained the supreme world, since the immortality which is called liberation (*mokṣa*) which is of the form of the manifestation (or revealment) of (ones) own nature comes only after the attainment of the Brahman in that particular place (here called Svarga), as in the passage "Having attained the Supreme Light one stands revealed with one's own nature."

*etad*...This is clear.

I. i. 14.

*pra te bravīmi tad u me nibodha*
*Svargyam agniṁ Naciketaḥ prajānan* |
*anantalokāptim atho pratiṣṭhāṁ*
*viddhi tvam enan nihitaṁ guhāyām* ||

I shall explain to you fully : know that of me, O Naciketas ! Knowing that fire which leads to Svarga (one gets) the attainment of the world of the infinite (Viṣṇu) and permanence. Know thou this (fire) placed in the cave.

COMMENTARY :

Thus spoken to, Death speaks :

*pra te bravimi* : I shall tell you who have requested. The use of the particle *pra* separated from the root is in accordance with *Pāṇini Sūtra* : 'They can be used separately from roots' (I. iv. 82).

*me* : From me : from my teaching do you know. This is the meaning. The goal of knowledge is now made known.

*anantalokāptim* : the attainment of the world of the Infinite Viṣṇu, because of the subsequent passage (I. iii. 9) "That is Viṣṇu's Supreme Abode.'

*atho* : After the attainment of that

*pratiṣṭhām* : Non-return also. 'One gets' is to be supplied. Thinking that Naciketas may have a doubt as to how that knowledge could have such a power (Death) says :

*viddhi* : Know... This nature of knowledge that is the cause of liberation due to its being a subsidiary to the meditation on Brahman placed in the cave, others do not know. (Therefore) do you know it, is the idea.

Or else, the relation of cause and effect is determined when it is said "Knowing Agni do thou get attainment of the world of the Infinite and Permanence" since the root *vid* meaning 'to know,' could mean 'to get.' The suffix (*śatṛ*) in *prajānan* is in accordance with *Pāṇini* (III. 2.126) "The suffixes *śatṛ* and *śānac* come after the root whose meaning signifies or is the cause of another action."

I. i. 15.

*lokādim agnim tam uvāca tasmai*
*yā iṣṭakā yāvatīr vā yathā vā* |
*sa cāpi tat pratyavadad yathoktam*
*arthasya Mṛtyuḥ punarevāhatuṣṭaḥ* ||[1]

To him, Death taught that fire, the means of (attaining) the world (Svarga). (He also taught him)

1. Prem : tushtim, satisfied.

which and how many are the bricks and how (they are to be arranged). He (Naciketas) too repeated it as it was taught. Then pleased with (his) ability Death spoke again.

COMMENTARY.

Then the Veda speaks.

*lokasya ādim :* means to the world ; the meaning is the same as *Svargya* (leading to Svarga).

*tam Agnim uvāca :* taught that fire. The meaning is that he taught him all this, the bricks, of what nature, of what number and the manner in which they have to be piled. The assimilation in *yāvatīr* (*yāvati as : yāvatyah* must be the proper form) is due to the exception in Vedic grammar.

*sa cāpi :* He too : and Naciketas too

*tat* : all that he heard exactly repeated, this is the meaning.

*arthasya ca... :* Death pleased on seeing the ability to grasp (the instruction given) of his disciple spoke again.

I. i. 16.

*tam abravīt prīyamāṇo mahātmā*
*varam tavehādya dadāmi bhūyaḥ* ।
*tavaiva nāmnā bhavitāyam agniḥ*
*sṛṅkām cemām anekarūpām gṛhāṇa* ॥

The Mahātman (Death) being pleased told him. Now I give you here one more boon. This Fire verily shall be known by your name. Also take this resonant necklace of many hues.

COMMENTARY.

'High-minded Death well-pleased told Naciketas thus. "I shall grant you a fourth boon." What it is he explains :

*tavaiva :* This fire I have been teaching you will be known by the name of Nāciketa.

*vicitrām sṛṅkām :* many-coloured resonant necklace of precious stones. This do you accept is the meaning.[1]

1. Krishna Prem gives a very interesting occult interpretation of this Garland of many forms in his work.

